तथा—

मरीचं दीप्यकं शुण्ठी चव्यं चित्रकमेव च ।
पिप्पली पिप्पलीमूलं धान्यकाजाजिसैन्धवम् ॥

जरणं दाडिमं पथ्यमामलं हिङ्गुगन्धकम् ।
एतत्कल्कं समं मिश्रं पक्त्वा तक्रं सपिण्डकम् ॥

वातश्लेष्महरा हृद्या परमा रुचिकारिणी ।
आमातीसारशूलघ्नी वातगुल्मनिकृन्तनी ॥

कासश्वासहरा चोग्रा मन्दाग्नेर्दीपनी परा ।
उक्ता चैव सदा पथ्या उत्तमा कढिका मता ॥

कढी ।

मुद्गपिष्टीविरचितान् वटकांस्तैलपाचितान् ।
हस्तेन चूर्णयेत्सम्यक् तस्मिंश्चूर्णे विनिक्षिपेत् ॥

भृष्टहिङ्ग्वादिकं सूक्ष्ममरीचं जीरकं तथा ।
निम्बूरसं यवानीं च युक्त्या सर्वं विमिश्रयेत् ॥

---

१. $J_1$. $T_1$. Bh. हृद्यगन्धकम् ।

२. Bh. adds before this verse उक्तं च । सुषेण :—

जरणमरिचशुण्ठीपिप्पलीमूलचूर्णं
दहनरुचकधान्यं सैन्धवं पिप्पलीनाम् ।
अभयकपित्थसारं दाडिमाजाजिहिङ्गु
युवतिकरसुपक्वं त्वामलक्यासु तक्रम् ॥

हरति पवनसङ्गं श्लेष्मदोषं च कासं
अरुचिजठरशूलमामवातातिसारम् ।
वदति सकलवैद्यो वैद्यराजः सुषेणो
रुचिकृदनलदीप्तं व्यञ्जनं राजयोग्यम् ॥

योगसारे, वाते —

निर्गुण्डि दीप्यकं वह्निहरिद्रा विश्वभेषजम् ।
तक्रकाजिकसम्पक्वं वातघ्नं वह्निवर्धनम् ॥

रामठम् ।

मुद्गपिष्टीं पचेत्सम्यक् स्थाल्यामास्तारकोपरि ।
तस्यास्तु गोलकं कुर्यात् तन्मध्ये पूरणं क्षिपेत् ॥
तैले तान् गोलकान् पक्त्वा कथिकायां निमज्जयेत् ।
गोलकाः पाचकाः प्रोक्तास्ते त्वार्द्रवटका अपि ॥
मुद्गार्द्रकवटा रुच्या लघवो बलकारकाः ।
दीपनास्तर्पणाः पथ्यास्त्रिषु दोषेषु पूजिताः ॥[1]

मुद्गार्द्रवटकाः ।

दाळयश्चणकानां तु निस्तुषा यन्त्रपेषिताः ।
तच्चूर्णं वेसनं प्रोक्तं पाकशास्त्रविशारदैः ॥[2]
वटिका वेसनस्यापि कथिकायां निमज्जिता ।
रुच्या विष्टम्भजननी बल्या पुष्टिकरी स्मृता ॥
एवमन्येऽपि ये केचिद् भक्ष्या वेसनसम्भवाः ।
तद्गुणास्तेऽपि बोद्धव्या युक्त्या पाकविशारदैः ॥

चुचुकवटी ।

समितां मर्दयेदाज्यैर्जलेनापि च सन्नयेत् ।
तस्यास्तु वटकं कृत्वा पचेत्सर्पिषि नीरसम् ॥
एलालवङ्गकर्पूरमरीचाद्यैरलङ्कृते ।
मज्जयित्वा सितापाके ततस्तं च समुद्धरेत् ॥
अयं प्रकारसंसिद्धो मण्ड इत्यभिधीयते ।
मण्डस्तु बृंहणो वृष्यो बल्यस्सुमधुरो गुरुः ॥
पित्तानिलहरो रुच्यो दीप्ताग्नीनां सुपूजितः ।
समिता शर्करासर्पिर्भिर्मिश्रा अपरेऽपि ये ॥
प्रकारा अमुना तुल्यास्तेऽपि चैतद्गुणा स्मृताः ॥

माठ ।

[3]अपरे शङ्करपालादयः, ते च —

---

१. Bh. त्रिदोषेषु प्रपूजिताः ।
२. Bh. adds a note here 'कढीचे पीठ, वेसन इत्येकनाम ।
३. J1. omits अपरे...शङ्करपाले ।

मण्डवत्समितां सिद्धां कृत्वा कुर्याच्च पोलिकाम् ।
शृङ्गाटाकृतिकान् कुर्यात् खण्डशस्तान् पचेद् घृते ।

मज्जयेच्च सितापाके ततस्ते तु समुद्धृताः ।
शङ्खपाला इति प्रोक्ताः पाकशास्त्रविशारदैः ॥

शङ्करपाल ।

पर्पटास्साज्यसमिता निर्मिता घृतभर्जिताः ।
कुट्टिताश्चालिताश्शुद्धशर्कराभिर्विमिश्रिताः ॥

तस्मिंश्चूर्णं क्षिपेदेलालवङ्गमरिचानि च ।
नारिकेरं सकर्पूरं चारबीजान्यनेकशः ॥

घृताक्तसमिता पुष्टा रोटिका रचिता ततः ।
तस्यां तत्पूरणं न्यस्य कुर्यान्मुद्रां दृढां सुधीः ॥

सर्पिषि प्रचुरे तां तु सुपचेन्निपुणो जनः ।
प्रकारज्ञैः प्रकारोऽयं संयाव इति कीर्तितः ॥

मण्डकेन समो ज्ञेयः संयावोऽपि गुणैर्जनैः ॥

करञ्जी ।

घृताढ्यया समितया कृत्वा लम्बपुटं ततः ।
लवङ्गोषणकर्पूरयुतया सितया युतम् ॥

पचेदाज्येन सिद्धैषा ज्ञेया कर्पूरनालिका ।
[1]संयावसदृशी चैषा गुणैः कर्पूरनालिका ॥

घृताढ्यसमितालोप्त्रीमध्ये क्षिप्त्वा सुशर्कराम् ।
लेपयेच्छकटेनैनां मृदु युक्त्या तु वेष्टयेत् [2] ॥

---

१. $J_1$. This line and the next two verses are left out probably by the scribe.

२. $P_1$. $P_2$. Bh. वेल्लयेत् ।

पचेद्घृतेऽतिबहुले सैषा स्याच्छर्करोदरी ।
गुणे गुणज्ञैस्सा ज्ञेया यथा कर्पूरनालिका ।

सांखररोटीति भाषया, कापूरनारी इति प्रसिद्धा ।

समिताया घृताढ्याया वर्तीर्दीर्घास्समाचरेत् ।
तास्तु सन्निहिता दीर्घाः पीठस्योपरि धारयेत् ॥
वेलयेद्वेलनेनैता यथैका पर्पटी भवेत् ।
ततच्छुरिकया तां तु संलग्नामेव कर्तयेत् ॥
ततस्तु वेलयेद् भूयः शकटेन तु लेपयेत् ।
ततस्संवृत्य तल्लोप्त्रीं विदधीत पृथक् पृथक् ॥
पुनस्तां वेल्लयेल्लोप्त्रीं यथा स्यान्मण्डलाकृतिः ।
ततस्तां सुपचेदाज्ये भवेयुश्च पुटाः पुटाः ॥
सुगन्धया शर्करया तदुद्धूलनमाचरेत् ।
सिद्धैषा फेनिका नाम्नी मण्डकेन समा गुणैः ॥
ततः किञ्चिल्लघुरियं विशेषोऽयमुदाहृतः ।

वेल्लयेत्प्रसारयेत् । शकटस्तु —

शालिचूर्णं घृतं तोयं मिश्रितं शकटं वदेत् । इति ॥

साटा इति महाराष्ट्राः ।

सुषेणः ––

लघुरपि रुचिकर्त्री फेनिकातिप्रशस्ता
बलवति लघुजीर्णे छर्दिनाशं करोति ।
विदलति मुखघर्मं चाम्लपित्तं विदाहं
जठरभरणयोग्या गोधुमैस्सम्प्रयुक्ता ॥

गोधूमफेणी ।

गुर्व्योऽतिबृंहणाः स्निग्धाः बल्याश्शुक्रकरास्स्मृताः ।
स्त्रीषु हर्षं प्रयच्छन्ति माषपिष्टकसम्भवाः ॥

माषफेणी ।

---

१. J1. gives the Sanskrit name कर्पूरनाली instead.

२. J1. omits साटा......सुषेणः ।

समिता वेसने जीरहिङ्गुमारीचयोजिते ।
घृताक्ते जलसंयुक्ते पीठस्योपरि वेल्लिते ।
घृतेन वाथ तैलेन भर्जिता पूरिका भवेत् ॥

पूरिका बृंहणाः स्निग्धा वृष्या पित्तानिलापहाः ।

घृतपाचिता इत्यर्थात् ।

मधुरास्तैलपाकिन्यो गुर्व्यः श्लेष्मानिलापहाः ॥

इत्युत्तरत्र विधानात् । पूरी ।

माषमुद्गादिचूर्णैश्च शालिपिष्टैश्च सम्भृताः ।
जलौघोपरि सम्पक्वाः सुरूपास्स्युरवन्तिकाः ॥

इडली[1] ।

इयमेव स्नेहपाके चण्डारिकेत्युच्यते । तद्गुणाश्च[2] —

वृष्या रोचनदीपनी बलकरा गुर्व्यप्यभिष्यन्दिनी
सद्यस्तर्पणकारिणी रसवती श्लेष्मप्रवृद्धिप्रदा ।
घोरानाहविबन्धगुल्मशमनी पित्तास्रविच्छेदिनी
स्नेहेनापि सुपूरिता च सततं भक्ष्या च चण्डारिका[3] ॥

तथा —

घृतपूरं बलकरं वृष्यं मधुरशीतलम् ।
हन्ति वातं रक्तपित्तं श्लेष्मलं[4] च विशेषतः ॥

घृतपूर इति चण्डारिकाया नामान्तरम् । घिउर इति भाषया ।

दीपकाः श्लेष्मला बल्या गुरुरुच्याश्च बृंहणाः ।

घिरडीं ।

समितायां घृताक्तायां लोप्त्रीं कृत्वाथ वेल्लयेत् ।
आज्ये तां भर्जयेत् सिद्धा शष्कुली फेणिकागुणा ॥

---

१. J1. omits tne word इडली ।
२. J1. omits the word तद्गुणाश्च ।
३. J1. adds here अवन्ती ; इडली चण्डारिका घिउर
४. P1. P2. Bh. श्लेष्मणम् ।

किञ्च[1] —

शष्कुली मधुरा स्निग्धा रुच्या श्लेष्मविवर्धनी ।
वातघ्नी बृंहणी गुर्वी वीर्येणोष्णा विदाहिनी ॥

कैचोरी[2] ।

अत्युच्छ्रितास्तु गोधूमगोलकाः परिपाचिताः ।
[3]वातघ्ना मधुराः स्निग्धा वृष्या बलवतां हिताः ॥

फले गोधूमाची ।

रुच्या वातहरा बल्या माषापूपास्तु बृंहणाः ।
शुक्लवृद्धिकराः स्निग्धाः शस्ता व्यायामशालिनाम् ॥

उडिदांचीं फळें ।

स्थूलास्सुवर्तुलाः कुब्जास्सच्छिद्रा स्नेहपाचिताः ।
पिष्टापूपा रुचिकरा गुरवः कफपुष्टिदाः ॥

घारगे ।

गोधूमचूर्णं सुश्लक्ष्णं क्षीरे पक्त्वा घृते पचेत् ।
एष भक्ष्यः परं वृष्यो मधुरो बृंहणो गुरुः ॥

क्षिरिधारगे ।

मुद्गानां धूमसीं सम्यग् घोलयेन्निर्मलाम्बुना ।
कटाहस्थघृतस्योर्ध्वं झर्झरं स्थापयेत्ततः ॥

धूमसीं तु द्रवीभूतां प्रक्षिपेज्झर्झरोपरि ।
पतन्ति बिन्दवस्तस्मात् तान् सुपक्वान् समुद्धरेत् ।
सितापाकेन संयोज्य कुर्याद्युक्तेन मोदकान् ॥

लघुर्ग्राही त्रिदोषघ्नः स्वादुश्शीतो रुचिप्रदः ।
चक्षुष्यो ज्वरहृद्बल्यतर्पणो मुद्गमोदकः ॥

मोतीलाडु ।

---

१. J1. अपि च ।
२. J1. gives the Sanskrit name instead as शष्कुली ।
३. T2. omits this line : वातघ्ना... ... ...हिताः ।

एवंप्रकारकाः कार्या वेसनेनापि मोदकाः ।
ते बल्या लघवश्शीताः किञ्चिद्वातकरास्तथा ।
विष्टम्भिनो ज्वरघ्नाश्च पित्तरक्तकफापहाः ॥

बून्दीचे लाडु ।

एवमेव प्रकारेण माषजा अपि मोदकाः ।
किञ्चित्समगुणा माषैः रत्नमोदकसंज्ञकाः ॥

रत्नलाडु ।

घृताक्तया समितया कृत्वा सूत्राणि तानि तु ।
निपुणो भर्जयेदाज्ये खण्डपाकेन योजयेत् ।
युक्तेन मोदकान् कुर्यात् ते गुणैर्मण्डका यथा ॥

सेवेचे लाडु ।

नूतनं घटमादाय तस्यान्तः कुशलो जनः ।
प्रस्थार्धपरिमाणेन दध्नाम्लेन प्रलेपयेत् ।
द्विप्रस्थां समितां तत्र दध्यम्लं प्रस्थसम्मितम् ।
घृतमर्धशरावं च घोलयित्वा घटे क्षिपेत् ॥
आतपे स्थापयेत्तावद्यावद्याति तदम्लताम् ।
ततस्तु प्रक्षिपेत्पात्रे सच्छिद्रे भाजने च तत् ॥
परिभ्राम्य परिभ्राम्य तत्सन्तप्ते घृते क्षिपेत् ।
पुनः पुनस्तत्प्रवृत्य विदध्यान्मण्डलाकृतिम् ॥
तां सुपक्वां घृतान्नीत्वा सितापाके तनुद्रवे ।
कर्पूरादिसुगन्धे च श्रपयित्वोद्धरेत्ततः ॥
एषा कुण्डलिनी नाम्ना पुष्टिकान्तिबलप्रदा ।
धातुवृद्धिकरी वृष्या रुच्या चेन्द्रियतर्पणी ॥

जिलेबी ।

---

१. J1. omits this verse.

२. After this Bh. adds the word योगप्रासेन before the next verse.

ऐषैव गोलाकृतिका भवेद्दधिवटीत्यपि ।

रेप्मीति भाषायां ।

तैले विपक्का वटकाश्च शालिजाः सुदुर्जरा रोचनभक्षणाश्च ।
कफप्रकोपं जनयन्ति सद्यो विशेषतः कूरवटाश्च जीर्णाः ॥

कुर्वडी ।

ऐतद्गुणैव शाण्डाकी प्रोच्यते गुणवित्तमैः ।

सांण्डयी ।

किञ्चिल्लघुगुणा आहुर्वटीर्मण्डसमुद्भवाः ।

नाचण्याच्य वड्या ।

समितायामर्धमितं घृतं क्षिप्त्वातिभर्जयेत् ।
वर्णव्यत्ययता यावदवतार्याथ शीतले ॥

समितायास्तृतीयांशमितां तत्र नियोजयेत् ।
एलालवङ्गमरिचं यथायोग्यं विनिक्षिपेत् ॥

लड्डुकास्तस्य पित्तघ्ना रुच्याः कामविवर्धनाः ।
समितामोदका नाम गुर्जरैस्सुविशेषिताः ॥

गुर्जरभाषया पलसूदीपा इति प्रसिद्धाः ।

समितायां सासितायां सम्यक् पक्वं पयोघृतम् ।
तथा योज्यं यथा तत्र सम्यक् स्याद्द्रवकोद्गमः ॥
भर्जयेदर्धपाकेऽस्य घृतं योज्यं यथामति ।
सम्यक् पाकेऽथ सम्पन्ने शीतस्थाने निधापयेत् ॥
समभागां सितां दद्यान्मोदकाः पूर्ववद्गुणैः ।
कथ्यन्ते द्रावका नाम गुर्जरैः पाककोविदैः ॥

द्रावालाडु ।

---

१. J₁. omits this pasage.
२. J₁. omits एतद्गुणैव ... ... ...पाककोविदैः । द्रावालाडु in
३. P₁. P₂. आर्द्रवटी ।

घृताक्तां समितां कृत्वा कुर्यादङ्गारकर्कटीम् ।
चूर्णयित्वाथ तां तत्र क्षिपेत्सघृतशर्कराम् ॥

कर्पूराद्यैर्वासयित्वा कुर्यादुत्तममोदकान् ।
संस्थाप्य शीतले स्थाने भक्षयेन्मण्डवद्गुणान् ॥

चुर्मालाडु ।

एतां एवाङ्गारकर्कटीस्थाने घृतपाके सति दळीयालाडु इति गुर्जरा व्यवहरन्ति ।

अत्युन्नताश्च गोधूमगोलकाः परिपाचिताः ।
मुद्गानां वेसवारैस्तु पूर्णा गुरुतरा मताः ॥

मुद्गपूर्णफलें ।

एवमेव विजानीयात् तुवरीचणकादिभिः ॥

तत्रापि—

मधुरं मधुराम्लं च पित्तकृन्नातिवातलम् ।
कफप्रकोपजननं विद्याच्चणकपूरणम् ॥

दुर्जरं बलकृद्वृष्यं वह्निमान्द्यकरं गुरु ।
रुच्यं पित्तप्रशमनं विद्यान्माषादि पूरणम् ॥

आदिशब्दो राजमाषादिसङ्ग्रहार्थः

पोळिका पूर्णगर्भा तु गुर्वी स्याद्गुडदालिता ।

पूर्णपोळी ।

मृदुपाकाश्च ये भक्ष्याः स्थूलाश्च कठिनाश्च ये ।
गुरवस्ते त्वतिक्रान्तपाकाः पुष्टिबलप्रदाः ॥

---

१. J1. Omits एतां .. ... व्यवहरन्ति

२. J1. adds:— पूरणविशेषः after चणकादिभिः and omits the word तत्रापि ।

३. .. dds चणकपूरणम् here the name

४. J1. omits:— आदिशब्दो .. ... सङ्ग्रहार्थः।

५. J1. पुष्टिबलापहाः

भक्ष्यस्सुधापरो नाम्ना वृष्यः पित्तानिलापहः ।
रोचनो बृंहणस्स्वादुर्वर्ण्यो दृष्टिप्रसादनः ॥

सुधापरः

एतत्प्रकारस्तु समितारवकान् खर्जूरखकान् वातिसूक्ष्मान् संगृह्य तत्सम-परिमाणां सितां चातिघनं घृतं च सममेकत्र मेलयित्वा सम्यग्धामलक-प्रमाणान् गोलकान् रजतपात्रे पृथक् पृथक् संस्थाप्य, तदुपर्यन्यद्रा-जतं पिधाय यावत्पिधानतापं संस्थापयेत् । ततस्तान् गोलकान् विक-सितमल्लीमाल्यसदृशान् निष्कासयेत् । तान् सुधापरानाहुः ।

प्रक्षाल्य तण्डुलान् सम्यक् चूर्णयेत्तानुलूखले ।
समया सितया योज्य मर्दयेत्तद्विचक्षणः ॥

यथा पिण्डीभवेत् पिष्टं तथा लोप्त्रीं विधाय च ।
वर्जितेषु वाहिफेनस्य निस्तुषेषु तिलेषु वा ॥

प्रसारितां तां सुघृते पाचयेत्सुविचक्षणः ।
भवन्ति ते ह्यनरसा रसिकानां मुदावहाः ॥

कुण्डलिन्यास्समगुणाः किञ्चिद् गुरुतरा अपि ।
वृष्याः परं पित्तहरास्तर्पणा रुचिकारकाः ॥

अनारसे ।

पक्त्वा जले सुविमलेऽप्यथवा शर्करोदके ।
पिष्टिकातण्डुलानां तु गाढां लोप्त्रीं प्रवेल्लयेत् ॥

घृते तैलेऽथवा सिद्धा घारिकेति मता सताम् ।

घार्या ।

भर्जितान् तण्डुलान्माषविदलैस्स्वसमैस्सह ।

पिष्ट्वा तण्डुलपिष्टं चाप्यपक्वं तत्र योजयेत् ।
किञ्चिदेकीकृते तस्मिन् जीरकादीन् विनिक्षिपेत् ॥

---

१. J1. omits एतत्प्रकारस्तु to अपाल in the next page line 10.
२. Bh. omits वातिसूक्ष्मान् ... .. गोलकान् ।
३. P1. P2. संस्थाप्य दृढाङ्गारेषु पात्रं संस्थाप्य तदुपरि ।

दध्ना संयोज्य चक्राणि रज्ज्वाकाराणि निर्मिमेत् ।
रुच्यानि तानि बल्यानि तैलपक्वानि भक्षयेत् ॥

चकल्या ।

प्रक्षालितावहततण्डुलपिष्टमिष्ट-
पाके निधाय सुगुडस्य पचेच्च युक्त्या ।
तुल्यस्य तस्य ललनाकरलालितस्य
लोप्त्रीं सुधांशुसदृशीं विरचेद् घृतादौ ॥
पित्तापहानतिरसान् प्रवदन्ति तज्ज्ञा-
स्तानेव किञ्चिदधिकद्रवतस्त्वपालान्[२] ।

अतिरस, अपाल ।

[३]गुडगोधूमसम्मिश्रतैलपक्वान्नभक्षणात् ।
करोति पित्तं श्लेष्माणं चक्षुर्मांद्यहितनाशनम् ॥
घारिचण्डारिकापूपवाटिकावटकादयः ।
वृष्याश्च रोचना बल्या गुरवः स्युः स्वयोनिवत् ॥

## अथ मांसप्रकाराः ॥

पाकपात्रे घृतं दद्यात् तैलं वा तदलाभतः ।
तत्र हिङ्गुहरिद्रां च भर्जयेत्तदनन्तरम् ॥
छागादेरस्थिरहितं मांसं तत्खण्डखण्डितम् ।
धौतं निर्गलितं तस्मिन् घृते तद्भर्जयेच्छनैः ॥
पाकयोग्यं जलं दत्वा लवणं च पचेत्ततः ।
सिद्धे जलेन संपिष्य वेसवारं परिक्षिपेत् ।
द्रव्याणि वेसवारस्य नागवल्लीदलानि च ।
तण्डुलाश्च लवङ्गानि मरीचानि समासतः ॥
अनेन विधिना सिद्धं शुद्धमांसमिति स्मृतम् ॥

[४]'वेसवार उपस्करः' इति हैमनः । तद्द्रव्याणि च निघण्टौ—

---

१. J1. omits this verse.

२. P1. P2. पारान् ।

३. Bh. omits this verse.

४. J1. omits: वेसवार ... ... न सार्वत्रिकम् ।

अजाजी मरिचं शुण्ठी ग्रन्थिधान्या निशाह्वयाः ।
पिप्पली दाडिमं चेति वेसवारगणो मतः ॥ इति ।

हृदयदीपे तु—

सुस्विन्नपिष्टं पिशितं गुडाज्यं
व्योषान्वितं स्यादिह वेसवारः ।

इति न सार्वत्रिकम् ।

शुद्धमांसं परं वृष्यं बल्यं रुच्यं च बृंहणम् ।
त्रिदोषशमनं श्रेष्ठं दीपनं धातुवर्धनम् ॥

शुद्धमांसम् ।

पाकपात्रे घृतं दत्त्वा हरिद्राहिङ्गु भर्जयेत् ।
छागादेस्सकलस्यापि खण्डान्यग्नौ तु भर्जयेत् ॥
सिद्धियोग्यं जलं दत्त्वा पचेन्मृदुतरं यथा ।
राजिकादियुते तक्रे मांसखण्डानि वासयेत् ॥

तत्तक्रमांसमित्युक्तम् ।

तक्रमांसं तु रक्तघ्नं लघु रुच्यं बलप्रदम् ।
कफघ्नं पित्तलं किञ्चित्सर्वाहारस्य पाचनम् ॥

तक्रमांसम् ।

पाकपात्रे तु बृहतिं मांसखण्डानि निक्षिपेत् ।
पानीयं प्रचुरं सर्पिः प्रभूतं हिङ्गुजीरकम् ॥
हरिद्रामार्द्रकीं शुण्ठीं लवणं मरिचानि च ।
तण्डुलांश्चापि गोधूमान् जम्बीराणां रसान् बहून् ॥
यथा सर्वाणि वस्तूनि सुपक्वानि भवन्ति हि ।
तथा पचेत निपुणो बहुमण्डस्थितिर्यथा ॥
एषा हरीषा बलकृद्वातपित्तापहा गुरुः ।
शीतोष्णा शुक्रदा स्निग्धा सरा सन्धानकारिणी ॥

हरीषा, आस इति भाषया ।

---

१. P2. T2 खण्डान् पात्रे ।
२. J1. omits this explanation.

शुद्धमांसविधानेन मांसं सम्यक् प्रसाधितम् ।
पुनस्तदाज्ये सम्भृष्टं तलितं प्रोच्यते बुधैः ॥

तलितं बलमेधाग्निशुक्रौजोवृद्धिकृन्मतम् ।
तर्पणं लघु सुस्निग्धं रोचनं बृंहणं परम् ॥

तलितमांसम् ।

कालखण्डादिमांसानि ग्रथितानि शलाकया ।
घृतं सलवणं दत्त्वा निर्धूमे दहने पचेत् ।
तत्तु शूल्यमिति प्रोक्तं पाककर्मविशारदैः ॥

शूल्यं बल्यं सुधातुल्यं रुच्यं वह्निकरं लघु ।
कफवातहरं पथ्यं किञ्चित्पित्तहरं हि तत् ॥

शूल्यं, शीख इति भाषया ।

शुद्धमांसं तनूकृत्य कर्तितं स्वेदितं जले ।
लवङ्गहिङ्गुलवणमरीचार्द्रकसंयुतम् ॥

एलाजीरकधान्याकनिम्बूरससमन्वितम् ।
घृते सुगन्धे तद् भृष्टं पूरणं प्रोच्यते बुधैः ॥

शृङ्गाटकं समितया कृतं पूरणपूरितम् ।
पुनस्सर्पिषि सम्भृष्टं मांसशृङ्गाटकं वदेत् ॥

मांसशृङ्गाटकं रुच्यं बृंहणं बलकृद् गुरु ।
वातपित्तहरं वृष्यं कफघ्नं वीर्यवर्धनम् ॥

मांसशृङ्गाटकम् ।

सिद्धमांसरसो रुच्यः श्रमश्वासक्षयापहः ।
प्रीणनो वातपित्तघ्नः क्षीणानामल्परेतसाम् ॥

विशिष्टभग्नसन्धानश्शुद्धानां शुद्धिकांक्षिणाम् ।
स्मृत्योजोबलहीनानां ज्वरक्षीणक्षतोरसाम् ॥

---

१. $T_2$. वृष्य ।

शस्यते ज्वरहीनानां दृष्ट्यायुश्च बलार्थिनाम् ॥

मांसरस ।

प्रकाराः कथितास्सन्ति बहवो मांससम्भवाः ।
ग्रन्थविस्तरभीतेन मया नात्र प्रदर्शिताः ॥

गोधूमचणपिष्टाभ्यां भाविताभ्यां घृतादिना ।
पिण्डिताभ्यां जलेनापि पाचिताभ्यां घृतादिषु ॥
कनकाभास्सुजायन्ते त एते कटकर्णकाः ।
बृंहणा मधुरास्स्निग्धास्तोष्णाः कटुविपाकिनः ॥

कटकर्णकाः, कडकणे इति भाषया ।

तप्ततैलघृते पात्रे गोलकान्विस्तृतान् क्षिपेत् ।
उत्तानाः पाकसंसिद्धा सूक्ष्मसुन्दात्रिकाः स्मृताः ।
एता बल्या विदाहिन्यः श्लेष्मलाः पित्तलाः परम् ॥

ता एव —

चन्द्रमण्डलसङ्काशा वर्तुला आपूपाविताः ।
वातपित्तहरा बल्या वृष्या दृष्टिप्रसादनाः ॥

सुन्दात्रिकास्संहारिकापरपर्यायाः ।

ईदानीं साधारण्येन गुणानाह —

गुडगोधूमसम्मिश्रतैलपक्वान्नभक्षणात् ।
करोति पित्तं श्लेष्माणं चक्षुर्मारुतनाशनम् ॥
विदाहिनस्तैलकृता गुरवः कटुपाकिनः ।
उष्णा मारुतदृष्टिघ्नाः पित्तलास्त्वक्प्रदूषणाः ॥

---

१. P1. ज्वरहीनानां ।

२. P1, P2 T2. Bh. adds before this

प्रक्षाल्य खण्डितं मांसं छागादेः कोष्णवारिणा ।
पलाण्डुखण्डान्याज्येऽथ प्रतप्ते प्रक्षिपेत् पुरा ॥
ततो मांसं विनिक्षिप्य पचेन्मृद्वग्निना चिरम् ।
सम्भारसंयुतं पक्वं वृष्यं रुच्यं बलप्रदम् ॥
तन्मांसं योजयेच्छाकपाकादौ पाकवित्तमः ॥

३. J1 adds the name संहारिकाः ।

४. J1. omits इदानीं ... ... चक्षुर्मारुतनाशनम् ।

५. J1. उष्णमारुत; Bh. तृष्णामारुत ।

भक्ष्या क्षीरकृता बल्या वृष्या हृद्याः सुगन्धिनः ।
विदाहिनः पुष्टिकरा दीपनाः पित्तनाशनाः ॥

बृंहणा वातपित्तघ्नाः भक्ष्या बल्याश्च सामिषाः ।
गुरवः पैष्टिका भक्ष्या वीर्योष्णाः कफपित्तलाः ॥

कुकूलकर्परभ्राष्ट्रकन्द्वङ्गारविपाचितान् ।
एकयोनीन् लघून् विद्यादपूपानुत्तरोत्तरम् ॥

भोजः —

यथा यथा भवेत्पाके संसर्गोऽग्नेस्तथा तथा ।[1]
भक्ष्याणामेकजातीनां लाघवं वैद्य आदिशेत् ॥

पर्पटा लघवो रुच्या लघीयान् क्षारपर्पटः ।
षैण्डाकी[2] वटकं दुग्धं दोषलं ग्लपनं गुरु ॥

'कुकूलं गोवरमि'ति केचित् । 'श्वभ्राकारमुत्तानं कर्परं कुकूलमि'-त्यन्ये । न्युब्जं तदेव कर्परम् । तदेव सच्छिद्रं भ्राष्ट्रम् । लोहमयं कण्डू । अङ्गारमङ्गारपूर्णपात्रं हसन्त्यादि । सुश्रुतः —

कपालाङ्गारपक्वास्तु लघवो वातकोपनाः ।
सुपक्वास्तनवश्चैव भूयिष्ठा लघवो मताः ॥

'[3]कपालं कर्परं' तत्र पक्वा मण्डकाः । अङ्गारपक्वास्तु हसन्त्यादौ पक्वा' इति व्याख्यातारः ।

आहारमाण्डा भाषा ।

स्विन्नभक्ष्याश्च ये केचित् सूप्यगोधूमभाविताः ।
भिषक् तेषां यथाद्रव्यमादिशेद् द्रव्यलाघवम् ॥

सूप्यमम्लमनम्लं वा गुरु विद्याद्यथोत्तरम् ।

---

१. J1. सम्पर्कोऽग्नेः ।
२. J1. शाण्डाकी वटकम् ।
Bb. omits कपालं to भाषा ।

मोदका[1] गुरुतराश्च वृष्यकाः श्लेष्मलाश्चिरविपाककारकाः ।
मन्दमाशु जनयन्ति कोष्ठकं माषमोदकवरा बलप्रदाः ॥

मोदका गुरवो वृष्याः श्लेष्मलाश्चिरपाकिनः ।
मन्दाग्निं च प्रयच्छन्ति गोधूमाश्शालिजास्तथा ॥

तथा —

शमयति बहुपित्तं श्लेष्मकोपं करोति
जनयति जठराग्निं वातरोगं निहन्ति ।
सुरतजमतिखेदं तत्क्षणादेव हन्या-
दमृतफलमुदारं चारु शंसन्ति वैद्याः ॥

साजोची लाडु ।

क्षीरे[2] कटाहे तापेन घनीभूते सितायुते ।
एलालवङ्गमरिचं यथायोग्यं विनिक्षिपेत् ॥

पिण्डकास्तर्पणा बल्या वृष्यास्स्युः पित्तनाशनाः ।
वातघ्नाश्च विशेषेण क्लमश्रमनिवारणाः ॥

पेडे ।

मुद्गरसवतून समरिताघृतान् पिण्डीकृतान् मृदून् ।
एलादियुक्तान् घर्मर्तुहितान् वै पिण्डकान् वरान् ॥
तान् मुद्गदळमित्याहुः पाकशास्त्रविशारदाः ॥

मुगदल ।

भृष्टैस्तिलैस्तैर्गुडसाधितानि रुच्यानि जन्तू[3]च्चबलापहानि ।
हरन्ति वातं तिलमोदकानि त्वग्दोषदृष्ट्यामयकारणानि ॥

तिलवे[4] ।

---

१. J1. adds सूपगुणाः before मोदका. etc. ।
२. J1. omits क्षीरे कटाहे ... ... ... कफवर्धनं इति
३. Bh. जन्तोश्च बलापहानि ।
४. Bh. तिललाडु ।

सुभृष्टैर्निस्तुषैश्शुभ्रैः कुट्टितैः कृतमोदकम् ।
सगुडं पित्तवातघ्नं वीर्यपुष्टिविवर्धनम् ॥

कौंदि[1] ।

अन्यत्र —

तिलैर्विघट्टितं श्लक्ष्णं गुडपिण्डमुदाहृतम् ।
हृद्यं मन्दाग्निजननं पुष्टिकृत्कफवर्धनम् ॥ इति ।

अथ मण्डादिगुणाः । वाग्भटः —

मण्डपेयाविलेपीनामोदनस्य च लाघवम् ।
यथापूर्वं शिवस्तत्र मण्डो वातानुलोमनः ॥

तृड्ग्लानिदोषशेषघ्नः[2] पाचनो धातुसाम्यकृत् ।
स्रोतोमार्दवकृत्स्वेदी सन्धुक्षयति चानलम् ॥

क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ।
मलानुलोमनी पथ्या पेया दीपनपाचनी ॥

विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ।
व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ॥

मण्डः[3] ओदनोपरितनो रसः । ससिक्थो रसः पेया विलेपी यवागूः ।

सुधौतः प्रस्नुतः स्विन्नस्त्यक्तोष्मा चौदनो लघुः ।
यश्चाग्नेयौषधक्वाथसाधितो भृष्टतण्डुलः ॥

विपरीतो गुरुर्यश्च क्षीरमांसादिसाधितः ।

आग्नेयौषधसाधितो भृष्टतण्डुलो यस्स लघुः । गुर्वौषधादिसाधितोऽभृष्टतण्डुलस्त्यक्तोष्मा क्षीरमांसादिसाधितश्च गुरुरित्यर्थः । आदिशब्द इक्षुरसघृतादिसंग्रहार्थः । हृदयदीपे मण्डो सिक्थः । [4]ससिक्था परिसिक्था यवागुश्च । परिसिक्था शिथिलोदन इत्यर्थः, यवागूश्शिथिलो-

---

१. Bh omits कौंदि

२. Bh. शोषघ्नः

३. J1. omits this sentence. T1. and Bh. read this after वाग्भट before the four preceding verses.

४. J1. ससिक्था पेयोपरिसिक्था

दन इति वचनात् । घनसिक्था विलेपी । परिस्रुतस्त्वोदनो मण्डः । तिलतण्डुलस्तु कृसर इति । कूश्माण्डक्षोदं युक्त्या निर्जलं विधाय माषपिष्टं गोधूमपिष्टं च समभागं दत्त्वा उभयसमां शर्करां संयोज्य सर्वमेकत्र चूर्णयित्वा आमलकवद्गोलकान् विधाय घृते पचेत् । पक्वांस्तान् मधुनि निक्षिपेत् । तानि मधुफलानीति व्याहरन्ति पाकज्ञाः ।

इति सिद्धान्नप्रकरणम् ।

---

## अथ शाकप्रकरणम् ।

तत्र —

मूलपत्रकरीराग्रफलकाण्डाधिरूढकाः ।
त्वक्पुष्पं कवचं चेति शाकं दशविधं स्मृतम् ॥

तत्र मूलं द्विविधम्; मूलकं, कन्दश्च । पत्रं प्रसिद्धम् । करीरं प्रथमाङ्कुरः । अग्रं प्रसिद्धम् । काण्डं कदल्यादेः । अधिरूढं बालास्थि मज्जेति केचित् । क्षेत्रोद्भूतफलमूलादेः स्वेदाम्बुोद्भिन्नाङ्कुरा विरूढका इत्यपि । त्वक्पुष्पेति प्रसिद्धे । कवचं छत्राकम् । न चात्र पदार्थमात्रस्य शाकापत्त्या भवितव्यं, व्यंजनतया प्रसिद्धेष्वेव तत्त्वात् । पृथिव्यादिनवद्रव्यवाचितया प्रयुक्तस्यापि द्रव्यशब्दस्य द्रव्यवांश्चैत्र इत्यादौ स्वर्णादिमत एवोपस्थितिवत् । उक्तं च —

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धाः ॥

इति । अतश्च न शाकव्रतादौ द्रव्यमात्रत्याग इत्यस्मत्कृतजनार्दनमहोदये विस्तरेण प्रपञ्चितम् । कैयदेवस्तु —

शाकं चतुर्विधं पुष्पपत्रकन्दफलात्मकम् ।

इति चातुर्विध्यमाह । भावप्रकाशे —

---

१. $J_1$. omits कूश्माण्डक्षोदं ... ... ... इति सिद्धान्नप्रकरणम् ।

२. $J_1$. $T_1$ कवकं चेति

३. $J_1$. कवकं

४. $J_1$. द्रव्यवानित्यादौ

५. $J_1$. omits this line.

पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा ।
शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम् ॥ इति ।

अथ शाकसामान्यगुणाः —

प्रायश्शाकानि सर्वाणि विष्टम्भीनि गुरूणि च ।
रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च ॥

शाकं भिनत्ति वपुरस्थि निहन्ति नेत्रं
वर्णं विनाशयति रक्तमथापि शुक्रम् ।
प्रज्ञाक्षयं च कुरुते पलितं च नूनं
हन्ति स्मृतिं गतिमिति प्रवदन्ति सन्तः ॥

शाकेषु सर्वेषु वसन्ति रोगास्सहेतवो देहविनाशनाय ।
तस्माद्बुधश्शाकविवर्जनं तु कुर्यात्तथाम्लेषु स एव दोषः ॥

अथ विशेषगुणाः । तत्र —

मूलकं तीक्ष्णमुष्णं च कटुकं ग्राहि दीपनम् ।
दुर्नामगुल्महृद्रोगवातघ्नं रुचिदं गुरु ॥

साधारणमूलकगुणाः ।

वाँणाख्यमूलकं सोष्णं कटुकं रुचिदीपनम् ।
गुल्मवातकृमिकफान्नाशयेद् ग्राहकं गुरु ॥

नीवारिमूल काश्यां प्रसिद्धः ।

गृंजनं कटुकोष्णं च कफवातरुजापहम् ।
रुच्यं च दीपनं हृद्यं दुर्गन्धं गुल्मनाशनम् ॥
सोण्ठीमुळा ।

पिण्डमूलं कटूष्णं च गुल्मवातादिदोषनुत् ।
वाटोळामुळा ।

---

१. $J_1$. अथ मूलानि । तत्र मूलकगुणाः Bh. अथ मूलकादीनां विशेषणगुणाः । तत्र

२. Bh. ग्राहिहृद्रोग

३. Bh. omits this verse.

कोष्णं तीक्ष्णं च तिक्तं मधुरकटुरसं मूत्रदं चातिमूत्र-
श्वासार्शःकासगुल्मक्षयनयनरुजोमान्द्यशूलामयघ्नम् ।
कण्ठ्यं बल्यं च रुच्यं मलविकृतिहरं मूलकं बालकं स्या-
दुष्णं जीर्णं तु शोषप्रदमुदितमिदं दाहपित्तास्रदायि ॥

मान्द्यं अग्निमान्द्यम् ।

आमं संग्राहि रुच्यं कफपवनहरं पक्वमेतत्कटूष्णं
भुक्तेः प्राग् भक्षितं चेत् सपदि वितनुते पित्तदाहप्रकोपम् ।
भुक्त्या सार्धं तु जग्धं हितगतिबलवद्रसवारेण तच्चेत्
पक्वं हृद्रोगशूलप्रशमनमुदितं मूत्रकृत्सर्वमूलम् ॥

हिता गतिः प्राप्तिर्यस्येति बलविशेषणम् । वातश्लेष्महरं शुष्कमिति वाग्भटः ।

इति मूलकगुणाः ॥

---

गाजरं मधुरं रुच्यं किञ्चित्कटु कफापहम् ।
आध्मानक्रिमिशूलघ्नं दाहपित्ततृषापहम् ॥

गाजरमूल ।

माकन्दी कटुका तिक्ता मधुरा दीपनी परा ।
रुच्याल्पवातकृत्पथ्या न वर्षासु हिताऽधिका ॥

अधिका बाहुल्येन भक्षिता ।

मायीणमूल ।

[1]रसोनोऽम्लरसोनस्स्याद् गुरूष्णः कफवातनुत् ।
अरुचिक्रिमिहृद्रोगशोकघ्नश्च रसायनः ॥

अम्लरसोनः अम्लरसशून्य इत्यर्थः ।

शुभ्रलसण ।

रसोनोऽन्यो महाकन्दो गृञ्जनो दीर्घपत्रकः ।

---

1. P1. रसोनोऽल्परसोनः

पृथुपत्रः स्थूलकन्दो यवनेष्टो विलोहितः ॥

गृञ्जनस्य मधुरं कटुकन्दं नालमप्युपदिशन्ति कषायम् ।
पत्रसञ्चयमुशन्ति च तिक्तं सूरयो लवणमस्थि वदन्ति ॥

रसेन चोष्णः कटुपिच्छलश्च स्निग्धो गुरुः स्वादुरसोऽतिबल्यः ।
वृष्यश्च मेधास्वरवर्णचक्षुर्भग्नास्थिसन्धानकरः सुतीक्ष्णः ॥

हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकृच्छ्रशोफान् ।
दुर्नामकुष्ठानलसादजन्तुकफामयान् हन्ति महारसोनः ॥

लशुनविशेषगुणाः ।

पलाण्डुः कटुको बल्यः कफपित्तहरो गुरुः ।
वृष्यश्च रोचनः स्निग्धो वान्तिदोषविनाशनः ॥

श्वेतपलांडु ।

अन्यो राजपलाण्डुः स्याद्यवनेष्टो नृपाह्वयः ।
पलाण्डुर्नृपपूर्वस्स्याच्छिखिरः पित्तनाशनः ॥

कफहृद्दीपनश्चैव बहुनिद्राकरस्तथा ॥

तथा—

वक्ष्यते नृपपलाण्डुलक्षणं क्षारतीक्ष्णमधुरो रुचिप्रदः ।
कण्ठशोषशमनोऽतिदीपनः श्लेष्मपित्तशमनोऽग्निदीपनः ॥

अतिदीपनः दाहकृत् ।

रक्तपलाण्डु ।

सूरणः कटुरुष्णश्च पाचनः क्रिमिवातहा ।
श्वासकासकफान् हन्ति परं दुर्नामनाशनः ॥

गुल्मशूलक्रिमिघ्नश्च गुरुरस्रविकारकृत् ॥

रक्तसूरण ।

श्वेतस्सूरणको रुच्यः कटूष्णः क्रिमिनाशनः ।
गुल्मशूलादिदोषघ्नः सर्वारोचकहारकः ॥

श्वेतसूरण ।

बल्यः कदल्याः कन्दस्स्यात् कफपित्तहरो गुरुः ।
वातलो रक्तशमनः कषायो रूक्षशीतलः ॥

कदलीकन्द ।

मुखालुस्स्यान्मधुरसः शिशिरः पित्तनाशनः ।
रुचिकृद्वातकृच्चैव दाहशोषतृषापहः ॥

मुखालू ।

पिण्डालुर्मधुरश्शीतो मूत्रकृच्छ्रामयापहः ।
दाहशोषप्रमेहघ्नो वृष्यस्सन्तर्पणो गुरुः ॥

ननु

कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः ।

इति वाग्भटः । इह तु मधुरश्शीत इति पित्तघ्नत्वं चानेनोक्तं भवति । चरके तु त्रिदोषकरत्वमिति महान् विरोधः । मैवम् । वग्भटोक्तिः पत्रविषया , चरकोक्तिरपक्वकन्दविषया । मधुरत्वाद्युक्तिस्तु पक्वविषयेति न कोऽपि विरोधः ।

पिण्डालू , मोहलकान्दे भाषया ।

रक्तपिण्डालुकश्शीतो मधुराम्लः श्रमापहः ।
पित्तदाहापहो वृष्यो बलपुष्टिकरो गुरुः ॥

रक्तालु ।

कासालुरुग्रकण्डूतिर्वातश्लेष्मामयापहः ।
अरोचकहरः स्वादुः पथ्यो दीपनकारकः ॥

कांसालु ।

फोडालुः श्लेष्मवातघ्नः कटूष्णो दीपनीयकः ।

फोडालुः ।

पानीयालुस्त्रिदोषघ्नः सन्तर्पणकरः परः ।

पानीयालु ।

नीलालुर्मधुरश्शीतः पित्तदाहश्रमापहः ।

नीलालुः

कटूष्णो महिषीकन्दः कफवातामयापहः ।
शुक्रजाड्यकरो रुच्यो महासिद्धिकरस्सितः ॥

महिषीकन्दः ।

हस्तिकन्दः कटूष्णः स्यात् कफवातामयापहः ।
त्वग्दोषश्रमहा कुष्ठविषवीसर्पनाशनः ॥

हस्तिकन्दः ।

कोलकन्दः कटुश्चोष्णः क्रिमिदोषविनाशनः ।
वान्तिविद्छर्दिशमनो विषदोषनिवारणः ।

कोलकन्द ।

वाराही तिक्तकटुको विषपित्तकफापहः ।
कुष्ठमेहक्रिमिकरो वृष्यो बल्यो रसायनः ॥

वाराहीकन्द ।

विष्णुकन्दस्तु मधुरश्शिशिरः पित्तनाशनः ।
दाहशोफहरो रुच्यस्सन्तर्पणकरः परः ॥

विष्णुकन्दः ।

मधुरो धरणीकन्दः कफपित्तामयापहः ।
रक्तदोषप्रशमनः कुष्ठकण्डूविनाशनः ॥

धरणीकन्दः ।

नाकुलीयुगलं तिक्तं कटूष्णं च त्रिदोषजित् ।
अनेकविषविध्वंसि किञ्चिच्छ्रेष्ठं द्वितीयकम् ॥

नकुलीकन्द ।

मालाकन्दस्तुतीक्ष्णस्स्याद्गण्डमालाविनाशनः ।
दीपनो गुल्महारी च वातश्लेष्मापकर्षकृत् ॥

मालाकन्द ।

विदारी मधुरा शीता गुरुः स्निग्धा च पित्तनुत् ।
ज्ञेया च कफकृत्पुष्टिबलवीर्यविवर्धिनी ॥

विदारीकन्द ।

---

१. Bh. omits this Verse.

मधुरश्शाल्मलीकन्दो मलसङ्ग्रहरोधजित् ।
शिशिरः पित्तदाहार्तिशोकसन्तापनाशनः ॥

सांवरीकन्द ।

चाण्डालकन्दो मधुरः कफपित्तास्रदोषनुत् ।
विषभूतादिदोषघ्नो विज्ञेयश्च रसायनः ॥

चाण्डालकन्द ।

त्रिपर्णी मधुरा शीता श्वासकासविनाशिनी ।
पित्तप्रकोपशमनी विषव्रणहरा परा ॥

त्रिपर्णीकन्द ।

लक्ष्मणा मधुरा शीता स्त्रीवन्ध्यात्वविनाशिनी ।
रसायनकरी बल्या त्रिदोषशमनी परा ॥

लक्ष्मणाकन्द ।

कुमुदोत्पलपद्मानां कन्दा गुणकरा मताः ।
मधुराश्च कषायाश्च पित्तासृग्दाहनाशनाः ॥

पद्मादिकन्दाः ।

छिच्छीकन्दः[1] कटुः पाके गुरुः श्लेष्मानिलापहः ।
अतिसारक्रिमिहरो बहुमूत्रो रुचिप्रदः ॥

मांठमूले ।

आर्द्रकं तरुणं रुच्यं वातलं कफरक्तजित् ।
सगुडार्द्रं मतं बल्यं वातश्लेष्मघ्नमग्निदम् ॥
विड्भेदि हृद्यमत्युष्णं पोषणं स्वरसादनुत् ।

तथा —

कटूष्णमार्द्रकं रुच्यं वृष्यं पाके हिमं लघु ।
मूत्रलं बृंहणं कण्ठ्यं दीपनं पाचनं जयेत् ॥
गुल्मानाहयकृत्तन्द्राशूलार्शःशोषपीनसान् ।

---

१. P 1. P 2. J1. Bh. च्छिछीकन्द ।

कासश्वासज्वरच्छार्दिहृच्छ्वासप्रबलानिलान् ॥
आर्द्रकस्य रसस्सद्यः पूरणात् कर्णशूलनुत् ।

[1]आले ।

हरिद्रा कटुतिक्तोष्णा कफवातास्रकुष्ठनुत् ।
मेहकण्डूव्रणान् हन्ति हेमवर्णविधायिनी ॥

हरिद्रा ।

[2]सैठी सतिक्ताम्लरसा लघूष्णा रुचिप्रदा च ज्वरहारिणी च ।
कफास्रकण्डूव्रणदोषहन्त्री वक्त्रामयध्वंसकरी च सोष्णा ॥

अम्बेहळेदि ।

गन्धपत्रा कटुस्वादुतिक्तोष्णा[3] कफवातजित् ।
कासच्छर्दिज्वरान् हन्ति पित्तकोपं करोति च ॥

कचोराघोर। गन्धपलाश इति मालवे प्रसिद्धः ।

कर्चूरः कटुतिक्तोष्णः[4] कफकासविनाशनः ।
मुखवैशद्यजननो गलगण्डादिदोषनुत् ॥

कचोरा ।

शृङ्गाटकश्शोणितपित्तहारी लघुस्सरो वृष्यतमो विशेषात् ।
त्रिदोषतापभ्रमतापहारी रुचिप्रदो मेहनदार्ढ्यहेतुः ॥

[6]त्रिदोषतापः त्रिदोषज्वरः । तापः दाहः ।

सिंघाटे ।

हन्त्यम्लपित्तमरुचिं वमिदाहमोहतृष्णामदक्लमहरं च सुशीतलं च ।
कण्ठस्य शोषशमनं गुरु वातरक्ते क्षीणे च पथ्यमतिचारु कसेरुकं स्यात् ॥

कसेरु ।

---

१. $J_1$. omits the word.
२. $P_2$. गोंठी ।
३. $J_1$. तीक्ष्णोष्णा ।
४. $J_1$. तीक्ष्णोष्णः ।
५. Bh. तापज्वरदाहहारी ।
६. $T_1$. $J_1$. Bh. omit त्रिदोष ... ... ... दाह

## अथ पत्रशाकाः

तत्र वास्तुकम् —

तदेकं तु बृहत्पत्रं रक्तं स्याद्गौडवास्तुकम् ।
प्रायशो यवमध्ये स्याद्यवशाकमतः स्मृतम् ॥

वास्तुकद्वितयं स्वादु क्षारं पाके कटूदितम् ।
दीपनं पाचनं रुच्यं लघु शुक्रबलप्रदम् ॥

सरं प्लीहास्रपित्तार्शःक्रिमिदोषत्रयापहम् ।

तथा—

वास्तुकं तु मधुरं सुशीतलं क्षारमम्लमपि दोषजित्परम् ।
रोचनं ज्वरहरं महार्शसां नाशनं च मलमूत्रशुद्धिकृत् ॥

चाकवत ।

चुक्रं स्यादम्लपत्रं तु लघूष्णं वातगुल्मनुत् ।
रुचिकृद्दीपनं पथ्यमीषत्पित्तकरं परम् ॥

चुका ।

चिल्ली वास्तुकतुल्या स्यात् सक्षारा श्लेष्मपित्तनुत् ।
प्रमेहमूत्रकृच्छ्रघ्नी पथ्या च रुचिकारिणी ॥

चील ।

श्वेतचिल्ली सुमधुरा क्षारा च शिशिरा च सा ।
त्रिदोषशमनी पथ्या ज्वरदोषविनाशिनी ॥

वथुवा ।

श्वानचिल्ली कटुस्तीक्ष्णा कण्डूतिव्रणहारिणी ।

सुणेचिल ।

शिग्रुपत्रभवं शाकं रुच्यं वातकफापहम् ।
कटूष्णं दीपनं पथ्यं क्रिमिघ्नं पाचनं परम् ॥

सेउगपत्रें

पालक्यमीषत्कटुकं मधुरं पथ्यशीतलम् ।
रक्तपित्तहरं ग्राहि ज्ञेयं सन्तर्पणं परम् ॥

पालख ।

पुष्कलः पुष्टिकृद्रुच्यः पित्तघ्नः श्लेष्मलो लघुः।
किञ्चिदुष्णो रक्तवर्णो वातरोगे न तौ हितौ ॥

पोकळा।

राजशाकिनिका रुच्या पित्तघ्नी शीतला च सा।
सैवातिशीतला रुच्या विज्ञेया स्थूलशाकिनी ॥

दोन्ही राजगिरे।

मारिषो रेचकश्शीतो गुरुर्मंदस्त्रिदोषजित्।

अन्यत्र तु —

मारिषो मधुरश्शीतो विष्टम्भी पित्तनुद् गुरुः ॥
वातश्लेष्मकरो रक्तपित्तनुद्विषमाग्निजित्।

रक्तमारिषो गुरुर्नातिसक्षारो मधुरस्सरः।
श्लेष्मलः कटुकः पाके स्वल्पदोष उदीरितः ॥

मांठ।

उपोदकी कटुश्शीता कषाया मधुरा च सा।
निद्रालस्यकरी रुच्या विष्टम्भश्लेष्मकारिणी ॥

मोटीवेली।

उपोदकी परा क्षुद्रा सूक्ष्मपत्रा तु मण्डपी।
रसवीर्यविपाकेषु सदृशी पूर्वया स्वयम् ॥

क्षुद्रवेली।

उपोदकी तृतीया च वनजा वन्यजाह्वया।
वन्याप्युपोदकी तिक्ता कटूष्णा रोचनी परा ॥

रानवेली।

क्षुपोपोदकनाम्नी च वल्लिस्सा मूलपोतिका।
मूलपोतिस्त्रिदोषघ्नी वृष्या बल्या लघुश्च सा ॥
बलपुष्टिकरी रुच्या जठरानलदीपनी।

बसला।

---

१. J1. omits this Verse.

२. T2. adds बल्या नूतनबलकरी। बलपुष्टिकरी विद्यमानबलवृद्धिकरी।

कुणञ्जरस्त्रिदोषघ्नो मधुरो रुच्यदीपनः ।
ईषत्कषायस्संग्राही पित्तश्लेष्महरो लघुः ॥

कुंजीर ।

झरसी मूत्रदोषघ्नी वातला पित्तजन्तुनुत् ।
मधुरा विरसा तिक्ता शस्तात्यन्तमरोचके ॥

थोर, झरसी ।

सूक्ष्मपत्रा तु झरसी तद्गुणा लघुदीपनी ।

धाकुटी झरसी ।

अन्यत्र तु – झरसीशाकं प्रकृत्य.

तिक्तं कटूष्णं दोषघ्नं कफवातहरं परम् ।
रेचनं दीपनं रुच्यं क्रिमिशूलव्रणापहम् ॥
झरशिरी झरा थुल्या पत्रिका झरपत्रिका ।

सूक्ष्मपत्रा ।

कपित्थपत्रा शकुला जातिचित्रकपत्रिका ।

स्थूलपत्रेत्याभिधानात् ।

कौसुम्भशाकं मधुरं कटूष्णं विण्मूत्रदोषापहमामयघ्नम् ।
दृष्टिप्रसादं कुरुते विशेषात् संशीलितं दीप्तिकरं च वह्नेः[२] ॥

कुसुम्भशाक ।

मिश्रेया मधुरा स्निग्धा कटुः कफहरा परा ।
वातपित्तोत्थदोषघ्नी प्लीहजन्तुविनाशिनी ॥

रानसेउप ।

कौसुम्भः कटुकः पाके श्लेष्महृद्दीपनश्च सः ।

वनकुसुम्भ ।

शतपुष्पादळं सोष्णं मधुरं गुल्मशूलनुत् ।
वातघ्नं दीपनं पथ्यं पित्तकृद्रुचिकारकम् ॥

सेउप ।

१. १. $P_1$. $P_2$. शक्रास्त्रन्त ।
२. $T_2$ ad ls विण्मूत्राश्रितवातादिविकारहारि । आमयास्तज्ज नितोपद्रवाः ।
३. $J_1$, छायकम् ।

तण्डुलीयकदलं हिमपर्शःपित्तरक्तविषकासविनाशि ।
ग्राहकं च मधुरं च विपाके दाहशोफशमनं रुचिदायि ॥

तांदुळजा ।

पानीयतण्डुलीयो यस्तत्कञ्चटमुदाहृतम् ।
कञ्चटं तिक्तकं रक्तपित्तानिलहरं लघु ॥

पानीयतांदुळजा ।

कटूष्णं राजिकापत्रं क्रिमिवातकफावहम् ।
कण्ठामयहरं स्वादु शुक्रहृद्रुचिदायकम् ॥

मोहरीपत्र ।

सार्षपं पत्रमत्युष्णं रक्तपित्तप्रकोपनुत् ।
विदाहि कटुकं स्वादु शुक्रहृद्रुचिदायकम् ॥

शिरसपत्र ।

चांङ्गेरीशाकमत्युष्णं कटु रोचनपाचनम् ।
दीपनं कफवातार्शःसंग्रहण्यातिसारजित् ॥

आवोंती ।

घोला च घोलिका घोलिः कलं दुष्कफकारकः ।
क्षेत्रजा लवणा रुच्या चाम्ला वातकफापहा ॥

सेतीचेघोल ।

आरण्या घोलिका चाम्ला रूक्षा रुच्यानिलापहा ।

रानघोल ।

पित्तश्लेष्मकरी चान्या सूक्ष्मा जीर्णज्वरापहा ।

मळांचीघोल ।

वर्षाभूवस्तुकौ वर्ण्यौ कफमान्द्यानिलापहौ ।
शाके रूक्षतरौ गुल्मप्लीहशूलापहारकौ ॥

घिटूळि वस्तु ।

---

१. Bh. omits this verse.

२. $P_1$. $P_2$. चागोरी

३. $T_1$. $T_2$. पुष्कलम ?

जीवन्ती मधुरा शीता रक्तपित्तानिलापहा ।
क्षयदाहज्वरान् हन्ति कफवीर्यविवर्धिनी ॥

एवमेव बृहत्पूर्वा रसवीर्यबलान्विता ।
भूतविद्राविणी ज्ञेया वेगाद्रसनियामिका ॥

हरिणवेलिद्वय ।

स्वर्णजीवन्तिका[2] वृष्या चक्षुष्या मधुरा तथा ।
शिशिरा वातपित्तासृग् दाह[3]जिद्बलवर्धिनी ॥

हेमहरिणवेलि ।

वरा शाकेषु जीवन्ती सार्षपस्त्ववरः स्मृतः ॥[1]

आखुकर्णी कटूष्णा च कफपित्तहरा सरा ।
आनाहज्वरशूलार्तिनाशिनी पाचनी परा ॥

भोपनी ।

वत्सादनी[4] तु मधुरा पित्तदाहास्रदोषजित् ।
वृष्या सन्तर्पणी रुच्या विषदोषविनाशिनी ॥

वासेनि ।

वृद्धदारुद्वयं गौल्यं पिच्छलं कफवातकृत् ।
बल्यं कासामदोषघ्नं द्वितीयं स्वल्पवीर्यदम् ॥

दोन्हीफाञ्जी ।

अत्यम्लपर्णी तीक्ष्णाम्ला प्लीहशूलविनाशिनी ।
वातहृद्दीपनी रुच्या गुल्मश्लेष्मामयापहा ॥

आंबटवेलि ।

---

१. The revisor adds in the margin of a previous folio: 'जीवन्तिः त्रिदोषहन्त्री । खाडे कुंठी महाराष्ट्रभाषया ताक । कानडीभाषया हाल गुणकी पला ।'

२. $J_1$. स्वर्णजीवाभिका ।

३. $P_1$ $P_2$. दाहकृद् ।

४. $J_1$. वत्सदानी ।

स्यातामुभौ गोक्षुरकौ तु शीतलौ
बलप्रदौ तौ मधुरौ च बृंहणौ ।
कृच्छ्राश्मरीमेहविदाहनाशनौ
रसायनौ तत्र बृहद्गुणोत्तरः ॥

सरांटेद्वय ।

[1]सीतिवारस्तु सङ्ग्राही कषायोष्णस्त्रिदोषनुत् ।
मेधारुचिप्रदो दाहज्वरहारी रसायनम् ॥

कुरडू ।

[2]शणस्त्वम्लकषायश्च मलगर्भास्रपातनः ।
वान्तिकृद्वातकफनुज्ज्ञेयस्तीव्रोऽङ्गमर्दजित् ॥

सणं[3] ।

अम्बष्टा सकषायाम्ला कफकण्ठरुजापहा ।
वातामयबलासघ्नी रुचिकृद्दीपनी परा ॥

आंबाडा ।

महाराष्ट्री कटुस्तिक्ता कषाया मुखशोधिनी ।
व्रणकीटादिदोषघ्नी रसदोषनिबर्हिणी ॥

पिंपलगा ।

[5]काचमाची कटुस्तिक्ता रसोष्णा कफनाशिनी ।
शूलार्शश्शोफदोषघ्नी [6]कुष्ठकण्डूतिहारिणी ॥

कामोणी ।

---

१. J1. सितावरस्तु ; Bh. सितिवारस्तु ।

२. P1 P2. शाण ।

३. Bh. adds ताग इति भाषायाम् ।

४. J. The revisor adds in the margin :—

अम्बष्टाम्बालिका माची कुची दन्तशठाम्बिका ।
अम्लोऽम्लको आम्लकश्च वल्कलं तन्तुरूपधृक् ॥
आम्लकोऽप्रतमश्चोष्णः कटी पवनदोषजित् ।
मेध्यः शाकवरश्चैव वह्निवृद्धिकरः परम् ॥

अम्बष्टाचे शाकगुण ।

५. Bh. काकमाची ।

६. Bh. कटुकण्डूति ।

मद्दाचञ्चुः कटूष्णा च कषाया मलशोधिनी ।
गुल्मशूलोदरार्शोऽर्तित्रिपघ्नी च रसायनी ॥

क्षुद्रचञ्चुश्च मधुरा कटूष्णा च कषायका ।
दीपनी शूलगुल्मार्शश्शमनी च विबन्धकृत् ॥

चञ्चूद्वय ।

कासमर्दश्च तिक्तोष्णो मधुरः कफवातनुत् ।
अजीर्णकासपित्तघ्नः पाचनः कण्ठशोधनः ॥

कासवदा ।

अजगन्धा कटूष्णा च वातगुल्मोदरापहा ।
कर्णव्रणार्तिशूलघ्नी पीता चेदञ्जने हिता ॥

तिलवणी ।

चक्रमर्दः कटुस्तीव्रमदो वातकफापहः ।
व्रणकण्डूतिकुष्ठार्तिदद्रुपामादिदोषनुत् ॥

तरवटा ।

[1]द्वीपान्तरसमुत्पन्नस्समहान् दद्रुहा परम् ।

काण्टेतरवटा ।

प्रसारिणी गुरूष्णा च तिक्ता वातविनाशिनी ।
अर्शःश्वयथुहन्त्री च मलविष्टम्भहारिणी ॥

चान्दवेलि । हीलमोचिकेति नामान्तरम् ।

ब्राह्मी हिमा कषाया च तिक्ता वातास्रपित्तजित् ।
बुद्धिं[2] प्रज्ञां च मेधां च कुर्यादायुःप्रवर्द्धिनी ॥

ब्राह्मी ।

ब्राह्मी तु सूक्ष्मपत्रान्या स्निग्धपत्रा जलोद्भवा ।
ब्राह्मी तिक्ता च सोष्णा च बलवातामदोषजित्[3] ॥

वांवि ।

---

१. $J_1$. omits द्वीपा......परम् । काण्टे तरवटा ।

२. $T_2$. adds the explanation : बुद्धिर्लोकव्यवहारदाक्षिण्यम् । प्रज्ञा शास्त्रीयव्यवहारे । मेधा धारणा ।

३. $J_1$. द्रुत ।

चिर्वल्लिका चैव कटुः कषाया
जीर्णज्वरे चातिहिता रसायनी ।

चीवलिघोल ।

गोलोमिका कटुस्तिक्ता त्रिदोषशमनी हिमा ।
मलरोगप्रशमनी दोषघ्नी ग्राहिणी च सा ॥

महागोलोमिका तद्वत् । कासलीति उत्तरापथे प्रसिद्धा ।

पाथरी ।

मेच्छाक्षी शिशिरा वृष्या व्रणदोषक्षयापहा ।

होनगुन्दा ।

द्रोणपुष्पी कटुस्सोष्णा रुच्या वान्तिकफापहा ।
अग्निमान्द्यहरा चैव पथ्या वातापहारिणी ॥

तथा —

द्रोणपुष्पीदलं स्वादु रूक्षं गुरु च पित्तजित्[3] ।
भेदनं कामलाशोथमेहज्वरहरं कटु ॥

कुम्भा ।

सुगन्धिर्वातपित्तघ्नी लघ्वरुच्या ज्वरे हिता ।
व्यञ्जनालङ्कृतिः शीता सार्द्रा कुस्तुम्बरी स्मृता ॥
शुष्कं कुस्तुम्बरीपत्रं वातार्शःपित्तगुल्मजित् ॥

कोथिंबीर ।

मेथिका कटुरुष्णा च रक्तपित्तप्रकोपिनी ।
अरोचकहरा दीप्तिकरी वातघ्नदीपनी ॥

मेथी ।

रुच्यं सुगन्धि कैडर्यपत्रं गरकफानिलान् ।
जयेदार्द्रं परं शुष्कं पत्रं बल्यं त्रिदोषनुत् ॥

कालशाकः, करेपक इति कार्णाटकाः ।

---

१. $J_1$. omits महा......प्रसिद्धा ।

२. $P_1$. $P_2$. मठाक्षी ।

३. $J_1$. पित्तकृत् ।

४. $J_1$. omits इति.. ...प्रयोगपारिजातः ।

'रमणो रामणः कालशाकः कैडर्य इत्यभिधानाद्' इति श्राद्धप्रकरणे प्रयोगपारिजातः ।

गाङ्गेरुकदळं शीतं कषायं मधुरं गुरु ।
मेदःशोफोदरार्शोघ्नं वातलं ग्राहि पिच्छलम् ॥

कारीशाक ।

बल्यं हिमं स्वाद्वगस्त्यं भूतकासत्रिदोषजित् ।

श्रमवैवर्ण्यजित्पत्रमागस्त्यं नातिशीतलम् ।
नक्तान्धानां हितं नस्यात् तत्स्याच्चातुर्थिकापहम् ॥

श्वेतागस्त्यपत्र ।

रक्तागस्त्यदळं रुच्यं विषवीसर्पकुष्ठजित् ।
तत्पुष्पं सर्वपापघ्नमगस्तिफलमग्निकृत् ॥

अवृष्यं रोचनं रूक्षं वातलं कफपित्तजित् ॥

रक्तागस्त्यपत्र ।

स्वादु बिम्बीदळं शीतं वातपित्तास्रपित्तजित् ।
कामलापाण्डुतृष्णाघ्नं मेदःशुक्रकफप्रदम्[1] ॥

बिंबीपत्र ।

पत्रं सूरणजं तीक्ष्णं रूक्षमुष्णं निकार्षि च ।
कृमिश्लेष्मार्शसां पथ्यं तद्वन्नाळं सरं गुरु[2] ।

सूरणपत्रनाळगुणाः ।

श्रीवल्ली कटुकाम्ला च वातशोफकफापहा ।
तत्फलं तैललेपघ्नमत्युष्णं रुचिकृत्परम्[3] ॥

शीकेकायीपत्रफलगुणाः ।

पट्टशाकस्तु नाडीको नाडीशाकश्च स स्मृतः ।
नाडीको रक्तपित्तघ्नो विष्टम्भी वातकोपनः ॥

नालीक ।

---

१. Bh. शुक्रकफप्रदम् ।
२. J1. लघु ।
३. J1. P1. P2. मलम्लम् ।

करम्बी शतपर्वा च कथ्यन्ते तद्गुणा अथ ।
कलम्बी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी ॥

फलंबी ।

[1]शीतिवारश्शितिवरस्स्वस्तिकस्सुनिषण्णकः ।
श्रीवारकस्सूचिपत्रः पर्णाकः कुक्कुटशिखी ॥

चाङ्गेरीसदृशः पत्रैश्चतुर्दळ इतीरितः ।
शाको जलान्विते देशे चतुष्पत्रीति चोच्यते ॥

[2]चतुष्पत्री ।

सुनिषण्णो हिमो ग्राही मोहदोषग्रहापहः ।
अविदाही लघुः स्वादुः कषायो रूक्षदीपनः ॥

वृष्यो रुच्यो ज्वरश्वासमेहकुष्ठभ्रमप्रणुत् ॥

सुणसुण ।

पाचनं लघु रुच्योष्णं पत्रं मूलकजं नवम् ।
स्नेहसिद्धं त्रिदोषघ्नमसिद्धं कफपित्तकृत् ॥

मूलकपत्र ।

यवानीशाकमाग्नेयं रुच्यं वातकफप्रणुत् ।
उष्णं कटु च तिक्तं च पित्तलं लघु शूलहृत् ॥

वोवापत्र ।

सेहुण्डस्य दळं तीक्ष्णं दीपनं रोचनं हरेत् ।
आध्माना[3]ष्ठीलिकागुल्मशूलशोथोदराणि च ॥

सेर इति भाषया । [4]निवडिङ्ग ।

पर्पटो हन्ति पित्तास्रं ज्वरतृष्णाकफभ्रमान् ।
संग्राही शीतलस्तिक्तो दाहनुद्वातलो लघुः ॥

पित्तपापडा ।

---

१. All Mss. other than $J_1$. omit this verse.
२. $J_1$. omits the name 'चतुष्पत्री' ।
३. $P_1$. $P_2$. नाच्छीतिका ।
४. $J_1$. omits the name नियडिङ्ग ।

रुच्यं चणकशाकं स्याद् दुर्जरं कफवातकृत् ।
अम्लं विष्टम्भजनकं पित्तनुद्दन्तशोथकृत्

चणकपत्र ।

[1]कलायशाकं भेदि स्याल्लघु तिक्तं त्रिदोषजित् ।

वाटाण्याचीं पत्रें ।

[2]कान्ता कफघ्नी चक्षुष्या पथ्या स्वादुकषायका ।

केना ।

धन्वन्तरिनिघण्टौ—

अग्निदीप्तिकरं श्वेतं शाकूटमसकं सरम् ।
दुर्नामक्रिमिमेहघ्नं कफपित्तहरं परम् ॥

श्वेतम् । कृष्णं तु—

[4]दुर्नामकृच्छ्यामलशाकुठं तु
मन्दाग्निविण्मूत्रविबन्धहन्तृ[3] ।

[5]चामकुरा । अळू महाराष्ट्राः ।

इति संक्षेपतः पत्रशाकानि ।

---

१. Bh. adds before कलायशाकं etc.—

चणकाम्लकमत्यम्लं दीपनं दन्तहर्षणम् ।
लवणानुरसं रुच्यं शूलाजीर्णविबन्धनुत् ॥

आंब चण्याची ।

२. J1. transposes the portion कान्ता कफघ्नी till the end of this section to the अग्र—section which comes after the next section in (p. 77)

Bh. कीना कफघ्नी ।

३. $J_1$ विबन्धहारि ।

४. T 4. adds the explanation: दुर्नामकं, कृन्ततीति कृत्, अर्शोघ्नमित्यर्थः । श्यामं कृष्णम् ।

५. Bh. has आन्ध्रेषु चामकुरा इति ।

अथ करीराणि ।

करीरमाध्मानकरं कषायं स्वादु तिक्तकम् ।

तथा —

करीरं कटुतिक्ताम्लं कषायं कटुशीतलम् ।
पित्तास्रदाहकृच्छ्रघ्नं रुचिकृत्पर्वनिर्गुणम् ॥

वंशांकुर ।

दीपनाः कफवातघ्नाश्चिरबिल्वाङ्कुरास्सराः ।
शतावर्यङ्कुरास्तिक्ता वृष्या दोषत्रयापहाः ॥

इति करीराणि ।

---

अम्राणि प्रसिद्धानि ।

---

अथ फलानि ।

मूत्राघातहरं प्रमेहशमनं कृच्छ्राश्मरीच्छेदनं
विण्मूत्रग्लपनं तृषार्तिशमनं जीर्णाङ्गपुष्टिप्रदम् ।
वृष्यं स्वादुतरं त्वरोचकहरं बल्यं च पित्तापहं
कूश्माण्डं प्रवरं वदन्ति भिषजो वल्लीफलानां पुनः ॥

पित्तनुत्तत्र कूश्माण्डं बालं मध्यं कफावहम् ।
पक्कं लघूष्णं सक्षारं दीपनं वस्तिशोधनम् ।
सर्वदोषहरं हृद्यं पथ्यं रेतोविकारिणाम् ॥

कूश्माण्डम् ।

---

१. J1. करीरमाध्मातकरं ।
२. J1. reads: इत्यङ्कुराः ॥
३. J1. reads: अम्रं वेत्राम्रादिः । आह वाग्भटः—वेत्राम्रं बृहती वासा इति
४. रेतोविकारिणाम् ।

डङ्गरी शीतला रुच्या दाहपित्तास्रदोषजित् ।
शोषहृत्तर्पणी गौरया जाड्यहा मूत्ररोधनुत् ॥

तथा—

बालं डङ्गरिकाफलं सुमधुरं शीतं च पित्तापहं
तृष्णादाहनिबर्हणं च रुचिकृत् सन्तर्पणं पुष्टिदम् ।
वीर्योन्मेषकरं लघु प्रबलदं भ्रान्तिश्रमध्वंसनं
पक्वं चेत्कुरुते तदेव मधुरं तृड्दाहरक्तं गुरु ॥

देवडांगरं[1] ।

वृष्यं दाहश्रमविशमनं मूत्रवृद्धिं च दत्ते
पित्तोन्मादापहरणकरं षड्भुजं वीर्यकारि ।
तिक्तं बाल्ये तदनु मधुरं किञ्चिदम्लं च पाके[2]
निष्पक्वं चेत्तदमृतसमं तर्पणं पुष्टिदायि ॥

षड्भुजाकर्कटी, मालवे प्रसिद्धा ।

कर्कटी मधुरा शीता तिक्ता च कफपित्तजित् ।
रक्तदोषकरा पथ्या[3] मूत्ररोधार्तिनाशिनी ॥

किञ्च—

मूत्रावरोधशमनं बहुमूत्रकारि
कृच्छ्राश्मरीप्रमथनं विनिहन्ति पित्तम् ।
वान्तिघ्नमस्रबहुदाहनिवारि रुच्यं
श्लेष्मापहं लघु च कर्कटिकाफलं स्यात् ॥

काँकडी[4] ।

---

१. Bh. adds:— फाळा भोंपळा इति भाषायाम्

२. T2 adds the explanation तदनु तारुण्ये । किञ्चिदम्लं स्वल्प-तिक्तम् ।

३. J1 पक्वा ।

४. Bh. मधुकर्कटी P1 P2 T1 T2 omit this word.

त्रपुसस्य फलं रुच्यं मधुरं शिशिरं गुरु ।
श्रमपित्तविदाहार्तिवान्तिहृद्‌ बहुमूत्रदम् ॥

तौसीकाकडी, कोङ्कणे प्रसिद्धा ।

एर्वारुकं पित्तहरं सुशीतलं मूत्रामयघ्नं मधुरं रुचिप्रदम् ।
सन्तोषमूर्च्छापहरं च तृप्तिदं वातप्रकोपाय घनं सुसेवितम् ।

मळांचें वाळुक ।

वालुकी मधुरा शीताऽऽध्माना हृद्या श्रमापहा ।

शारदाचिर्भिट ।

बाल्ये तिक्ता चिर्भिटी किञ्चिदम्ला
गौल्योपेता दीपिनी सा च पाके ।
शुक्लातिक्ता श्लेष्मवातारुचिघ्नी
जाड्यघ्नी सा रोचनी दीपिनी च[1] ॥

भेलसेद ।

मृगाक्षी कटुका तिक्ता पाकेऽम्ला वातनाशिनी ।
पि[2]त्तकृत्पीनसहरा दीपनी रुचिकृत्परा ॥

सेन्दणी ।

चीनकर्कटिका रुच्या शिशिरा पित्तनाशिनी ।
मधुरा तृप्तिदा हृद्या दाहशोफापहारिणी ॥

पटोलसदृश वाळुक ।

डिण्डिशो रुचिकृद्भेदी पित्तश्लेष्मापहः स्मृतः ।
सुशीतो वातलो रूक्षो मूत्रलश्चाश्मरीहरः ॥

दिंडसें[3] ।

---

१. T२. Bh. add the expanation: शुक्ला अतिपक्वा । अतिक्ता निश्शेषगततिक्तरसा, अतिमधुरेत्यर्थः ।

२. P१ P२. पितृहृत् ।

३. P1. डिंडसे P2. हिण्डसे . J1. दिण्डसे ।

कुम्भतुम्बी समधुरा शिशिरा पित्तनाशिनी ।
गुरुस्सन्तर्पणी रुच्या वीर्यपुष्टिबलप्रदा ॥

गोरक्षतुंबी[1] ।

तुम्बी समधुरा स्निग्धा पित्तघ्नी गर्भपोषकृत् ।
वृष्या वातप्रदा चैव बलपुष्टिविवर्धिनी ॥

दूधभोंपळा ।

भूतुम्बी कटुकोष्णा च सन्निपातापहारिणी ।
दन्तार्गळं दन्तशोथं धनुर्वातं च नाशयेत् ॥

भोंयतुंबी[2] ।

कलिङ्गो मधुरश्शीतो दाहपित्तश्रमापहः ।
वृष्यस्सन्तर्पणो बल्यो वीर्यपुष्टिविवर्धनः ॥

कलिङ्गडे ।

खर्बुजं मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु ।
स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम् ॥

तेषु यच्चाम्लमधुरं[3] सक्षारं च रसाद्भवेत् ।
रक्तपित्तकरं तत्तु मूत्रकृच्छ्रकरं परम् ॥

खर्बूज् ।

हस्तिकोशातकी स्निग्धा मधुराध्मानवातकृत् ।
वृष्या क्रिमिहरा चैव व्रणसंरोपणी परा ॥

तथा —

कोशातकी राजपदप्रपूर्वा मदात्यये पित्तगदे च युक्ता ।
श्रमे क्लमे मेहभगन्दरे च व्रणेषु पित्तेष्वपि नित्यपथ्या ॥

पारसादोडका ।

---

१. T2. adds पत्रा भोंपला । Bh. पत्रा भोंपळा पर्वतीया ।
२. Bh. adds कटु भोंपळा ।
३. J1. सचाम्लमधुरम् ।

शिराकोशातकी पित्तशमनी क्षुत्तृषापहा ।
मेहे हिता सदा पथ्या पित्तच्छर्दिविनाशिनी ॥

शिरादोडका ।

फलानि माषवद्विद्यात् काकाण्डोलात्मगुप्तयोः ।

कुहिरीद्वय ।

पटोली स्वादुपित्तघ्नी रुचिकृज्ज्वरनाशिनी ।
बलपुष्टिकरा पथ्या ज्ञेया दीपनपाचनी ॥

पटोली ।

तथा —

पटोलपत्रं पित्तघ्नं नालं तस्य कफापहम् ।
फलं त्रिदोषशमनं मूलं च स्याद्विरेचनम् ॥

[1]चतुरङ्गपरवरें ।

[2]चिचिण्डो वातपित्तघ्नो बल्यः पथ्यो रुचिप्रदः ।
शोषिणोऽतिहितः किञ्चिद्गुणैर्न्यूनः पटोलतः ॥

पटवलेम् ।

असिशिम्बी तु मधुरा कषाया श्लेष्मपित्तजित् ।
व्रणदोषापहन्त्री च शीतला रुचिदायिनी ॥

[3]खड्गशिंबी ।

निष्पावौ द्वौ हरिच्छुभ्रौ कषायमधुरौ रसे ।
कण्ठशुद्धिकरौ मेध्यौ दीपनौ [4]रुचिकारकौ ॥

सङ्ग्राहि समवीर्यं स्यादीषच्छ्रेष्ठं द्वितीयकम् ।

दोन्हीघेवडे ।

---

१. All mss. other than $J_1$. read only पवरें ।
२. $T_2$. चिचिटो.
३. $P_1$. $P_2$. $T_1$. $J_1$. खडशिंबी.
४. $T_2$. रुचिदायकौ .

अलसान्द्रफलं स्वादु कषायं कफवातजित् ।
विष्टम्भ्यरुच्यं रुच्यं च वह्निमान्द्यकरं गुरु ॥

च्यवलीच्या सेगा ।

रूक्षातिपित्तकृद् गुर्वी वातला गौरवाकुची ।
तिक्ता नोदरिणां पथ्या ग्रहण्यर्शोविकारिणाम् ॥

वाकुची, गोधारी ।

शीतं शिग्रुफलं वृष्यं पिच्छलं श्लेष्मलं गुरु ।
दीपनं वातपित्तघ्नं वर्ण्यं दुर्नामेहजित् ॥

शिग्रुफलं श्वेतम् ।

शिग्रु रक्तं कटु स्निग्धं स्वादु तीक्ष्णं हिमं गुरु ।
चक्षुष्यं स्तन्यकृद् वृष्यं बृंहणं वस्तिशोधनम् ॥
मेदोगुल्मोदरश्वासवैस्वर्यक्रिमिशोफजित् ॥

रक्तशिग्रु ।

वातादिदोषत्रुद्बल्यं मूलं तस्योष्णमग्निकृत् ।

शिग्रुमूलम् ।

शिग्रुपुष्पं गुरु हिमं पित्तश्लेष्मक्रिमिप्रणुत् ।
चक्षुष्यं शुक्रलं रुच्यं बृंहणं दीपनं सरम् ॥

इति शिग्रुः ।

आगस्त्यं तरुणं रुच्यं बालं पित्तकफक्रिमीन् ।
हन्ति चक्षुर्व्रणे शस्तं मध्यमं कुसुमं लघु ॥

अगस्त्यफलपुष्पगुणाः ।

---

१. T2. वातकृत् .
२. J1. omits this verse.
३. P1. Bh., अग्निजित् .
४. J1. omits this line.

पनसस्य फलं बालं कषायं मधुरं गुरु ।
मेदःश्लेष्मकरं बल्यं तृड्दाहानिलपित्तजित् ॥

लवणादियुतं रुच्यं मध्यपक्कं तथा गुरु ।

फणस अपक्क ।

पनसं मधुरं सुपिच्छलं गुरु हृद्यं बलवीर्यवृद्धिदम् ।
श्रमदाहविशोषनाशनं रुचिहृद्ग्राहि च दुर्जरं परम् ॥

पक्कपनस ।

ईषत्कषायमधुरं तद्बीजं वातलं गुरु ।
तत्फलस्य विकारघ्नं रुच्यं त्वग्दोषनाशनम् ॥

तथा —

मज्जा पनसजो वृष्यो वातपित्तकफावहः ।

पनसबीज ।

विशेषात्पनसं वर्ज्यं गुल्मिभिर्मन्दवह्निभिः ।

---

१. Bh. adds after फणसः —

मदनपालनिघण्टौ —

पनसं शीतलं पक्वं स्निग्धं पित्तानिलापहम् ।
बल्यं शुक्रप्रदं हन्ति रक्तपित्तक्षतक्षयान् ॥

आमं तदेव विष्टम्भि वातलं तुवरं गुरु ।
पनसोद्भूतबीजानि वृष्याणि मधुराणि च ॥

गुरूणि बहुवर्चांसि सृष्टमूत्राणि तानि च ।
मधुरास्तस्य पित्तघ्नाः वृष्याः श्लेष्मानिलापहाः ॥

२. P1. सुपिञ्च्छलव, T2. सुपिच्छिलम् ·

३· P1; P2. रुचिकृ। ।

अथ पनसावर्तः ।

पनसस्यातिपक्वस्य मज्जा कटविभावितः ।
घर्मशुष्कमिमं प्राहुः पनसावर्तमित्यथ ॥

तद्गुणाः फलवत्किञ्चिल्लघुता गुणयोगतः ॥

फनस पोळी ।

लकुचः क्षुद्रपनसो लकुजो डहुरित्यपि ।
आमं लकुचमुष्णं च गुरु विष्टम्भकृत्तथा ॥

मधुरं च तथाम्लं च दोषत्रितयरक्तकृत् ।
शुक्राग्निनाशकं चापि नेत्रयोरहितं स्मृतम् ॥

सुपक्वं तत्तु मधुरमम्लं चानिलपित्तकृत् ।
कफवह्निकरं रुच्यं वृष्यं विष्टम्भकं च तत् ॥

वडहर ।

तुण्डी तु मधुरा पित्तश्वासकासकफापहा ।
असृग्ज्वरहरा रम्या कासजिद् गृहबिम्बिका ।

गोंडतोण्डली ।

तिक्ता स्वादुहिमा निंबी वातपित्तास्रशोफजित् ।
छर्दिनी कामलापाण्डुश्वासशोषज्वरापहा ॥

कडुतोंडली ।

कारवल्ली सुतीक्ष्णोष्णा दीपनी कफवातजित् ।
अरोचकहरा चैव रक्तदोषकरी च सा ॥

तथा —

कारवेल्लं सकटुकं दीपनं कफपित्तजित् ।
तिक्तं रुच्यं ज्वरश्वासकासगुल्महरं लघु ॥

---

१. $J_1$. omits अथ पनसावर्तः........ फनस पोळी ।

२ $P_1$ ण्डीत्न्मधुरा $P_2$. तुण्डी तन्मधुरा ।

३ $P_1$ $P_2$ ग ड तोण्डवली ।

तथा —

महावल्ली बद्धविट्का स्वाद्वी गुर्व्यग्निपित्तजित् ।
श्वेतवल्ली विषहरा प्रसूतिक्लेशनाशिनी ॥

तथा —

तीक्ष्णोष्णं दोषजिद्बल्यं कारवेल्लं विषापहम् ।
प्रसेकश्वासकासार्शःक्रिमिकुष्ठज्वराञ्जयेत् ॥

कारली[1] ।

कर्कोटकी कटूष्णा च तिक्ता विषविनाशिनी ।
वातघ्ना पित्तहृच्चैव दीपनी रुचिकारिणी ॥

करटोली[2] ।

कडहुञ्ची कटूष्णा च तिक्ता च रुचिकारिणी ।
दीपनी योनिदोषघ्नी गर्भस्रावविषापहा ॥

कडहुञ्ची ।

स्वादुपाकरसं शीतं पिच्छलं वातपित्तजित् ।
श्लेष्मलं सृष्टविण्मूत्रमनक्ष्यं गुरु बृंहणम् ॥
स्थौल्यं वृष्यं क्रिमिकरं महन्महतिकाफलम् ॥

थोरवांगे ।

---

१. J₁. कारवल्ली ।

२. J₁. Revisor adds in the margin on this subject :—

सर्वरोगहरं पथ्यममृतं बृंहणं लघु ।
कर्कोटकीफलं रुच्यं मधुरं तत्रिदोषनुत् ॥
ब्रह्मा निर्मथ्य देवानाममृतं दत्तवान् पुरा ।
मर्त्यानामिह कर्कोटीफलं दत्वाऽभवत्सुखी ॥

पाठान्तरे —

हृद्यं रोचनमग्निदीपनकरं कर्कोटकीनां फलं
चक्षुष्यं व्रणिनां हितं क्षयवतां गुल्मातुराणामपि ।
कासश्वासहरं प्रमेहदमनं दोषत्रयध्वंसनं
किञ्चित्तिक्तरसं ज्वरघ्नमुदितं रोगेषु चार्त्तें हितम् ॥

कोमलं नीलवृन्ताकं मधुरं बृंहणं गुरु ।
पित्तघ्नं प्रीणनं जाड्यं विष्टम्भि कफवातकृत् ॥

नीलवृन्ताक ।

त्रिदोषशमनं पथ्यं सुस्वादु कटु दीपनम् ।
सर्वव्याधिहरं हृद्यमुष्णं वार्तारिकाफलम् ॥

डोरलीवांगीं ।

रुच्यं स्वयं ज्वरश्वासकासार्शस्सर्वरोगजित् ।
हृद्यं कटु रसे पाके क्षुद्रं वार्ताकिकाफलम् ॥

सूक्ष्मवांगीं ।

चित्रफला कण्टकिनी महती कट्फला तथा ।
मिश्रवर्णफला नीलफला रक्तफला तथा ॥

शाकश्रेष्ठा रक्तफला नृपप्रियफला तथा ।
वार्ताकी कटुका रुच्या मधुरा पित्तनाशिनी ।

बलपुष्टिकरी हृद्या गुरुर्वातेषु निन्दिता ॥

सर्ववांगीं ।

बालं पथ्यं त्रिदोषघ्नं मध्यमं पित्तवर्धनम् ।
पक्कं श्लेष्मकरं विद्यात् समस्तं बृहतीफलम् ॥

डोरली ।

विज्ञेया श्वेतबृहती वातश्लेष्मविनाशिनी ।

श्वेतडोरली ।

कण्टकारी कटूष्णा च दीपनी श्वासकासनुत् ।
प्रतिश्यायार्तिदोषघ्नी कफवातज्वरार्तिनुत् ॥

रिङ्गणी ।

---

१. J1. omits डोरलींवाङ्गी and the next verse, possibly due to the scribe.

२. J1. वृत्तफला ।

लवणमरिचचूर्णेनावृतं रामठाढ्यं
  दहनवदनपक्वं कञ्चुकान्तं नितान्तम् ।
हरति पवनसङ्गं श्लेष्महन्तृ प्रसिद्धं
  जठरभरणयोग्यं चारुभोज्यं भरित्रम् ॥

अन्यच्च —

वृन्ताकं पिच्छलं किञ्चिदङ्गारपरिपाचितम् ।
कफमेदानिलामघ्नमत्यर्थं लघु दीपनम् ।
तदेव हि गुरु स्निग्धं सतैलं लवणान्वितम् ॥

भरीत ।

अपरं श्वेतवृन्ताकं कुक्कुटाण्डसमं भवेत् ।
तदर्शस्सु विशेषेण हितं हीनं च पूर्वतः ॥

श्वेतवृन्ताक ।

भेण्डा त्वम्लरसा सोष्णा ग्राहिका रुचिकारिका ।

भेण्डी ।

---

अथ कदली ।

तत्र —

बालं फलं मधुरमल्पतया कषायं
  पित्तापहं शिशिररुच्यमथापि नालम् ।
पुष्पं तदप्यनुगुणं क्रिमिहारि कन्दं
  पर्णं च शूलशमनं कदलीभवं स्यात् ॥

किञ्च —

रम्भापक्वफलं कषायमधुरं बल्यं च शीतं तथा
  पित्ताम्रप्रविमर्दनं गुरुतरं पथ्यं न मन्दानले ।

---

१. $T_1$; $J_1$. कफमेदालिमा, Bh. कफमेदोऽनिला ।

२. $J_1$. पित्तं वातविमर्दनम् ।

सद्यः शुक्रविवृद्धिदं क्रिमिहरं तृष्णापहं कान्तिदं
दीप्ताग्नौ सुखदं कफामयहरं सन्तर्पणं जर्जरम् ॥

महारम्भाफलं शीतं तुष्टिपुष्टिकरं गुरु ।
रक्तपित्तहरं वृष्यं तीव्राग्नीनां प्रशस्यते ॥

महाकदळी ।

स्यात्काष्ठकदली रुच्या रक्तपित्तहरा हिमा ।
गुरुर्मन्दाग्निजननी दुर्जरा मधुरा परा ॥

कटकेळी ।

सुवर्णमोचा मधुरा हिमा च बल्याऽशने दीपनकारिणी च ।
तृषापहा दाहविमोचनी च कफापहा वृष्यकरी गुरुश्च ॥

तथा —

क्षुद्रं रम्भाफलं शीतं स्वादुपाकरसं गुरु ।
पित्तप्रदरदाहघ्नं वृष्यं नात्यर्थदीपनम् ॥

सोनकेळी ।

गिरिकदळी हिममधुरा बलवीर्यविवृद्धिदायिनी रुचिरा ।
तृट्पित्तदाहशोषप्रशमनकरी दुर्जरा च गुरुः ॥

वैनकदळी ।

कृष्णं रम्भाफलं रुच्यं कषायमधुरं तथा ।
मेहं पित्तं तृषां हन्ति बृंहणं वातलं लघु ॥

कॉळकेळि ।

---

१. $J_1$. कफामयकरम् ।
२. All Mss. other than $J_1$ omit this name.
३. $J_1$. रुच्या ।
४. All Mss. other than $J_1$. omit this name.
५. All Mss. other than $J_1$. omit this name.

सुगन्धा कृष्णरम्भा च शैलरम्भा यथोत्तरम् ।
निन्दिताः फलमालां तु कषायं मधुरं गुरु ॥
रम्भाफलत्वक्कटुका तिक्ता पित्तहरा लघुः ।

इति कदलीगुणाः ।

---

करमर्दस्सतिक्ताम्लो बालो दीपनदाहकः ।
पक्वस्त्रिदोषशमनो रुचिघ्नो विषनाशनः ॥

करवंदें ।

कषायमधुरो रूक्षस्तिन्दुकश्श्लेष्मकारकः ।
संग्राही दुर्जरो जिह्वाजाड्यकारी जडो गुरुः ॥

टेंभरू ।

अश्वत्थवृक्षस्य फलानि पथ्या-
न्यतीव हृद्यानि सुशीतलानि ।
निघ्नन्ति पित्तं सह शोणितेन
दाहं तृषां छर्दिमरोचकं च ॥

पिंपरे ।

औदुम्बरं फलमतीव सुशीतलं च
सद्यो निवारयति शोणितपित्तदुष्टम् ।
पथ्यं विषे विषमपित्तशिरोविकारे
नासाप्रवृत्तरुधिरे च विशेषतस्तु ॥

तथा —

औदुम्बरं कषायं स्यात् पक्वं तु मधुरं हिमम् ।
क्रिमिहृत् पित्तरक्तघ्नं मूर्च्छादाहतृषापहम् ॥

उंबरें ।

---

१. Bh. adds after this;

रम्भासारश्शीतलो नातितिक्तो
तृड्दाहघ्नो मूत्रकृच्छ्रातिसारम् ।
मेहान् हन्ति स्फोटकं चाम्लपित्तं
रक्तस्रावं सोमरोगं निहन्ति ॥ इति कदलीसारगुणाः ।

मुष्ककः कटुकोऽम्लश्च रोचनः पाचनः परः ।
प्लीहगुल्मोदरार्तिघ्नो द्विधा तुल्यगुणान्वितः ॥

मोखें ।

श्लेष्मान्तकः कटुहिमो मधुरः कषायः
स्वादुश्च पाचनकरः क्रिमिशूलहारी ।
आमास्रदोषमलरोधनदुव्रणार्ति-
विस्फोटशान्तिकरणः कफहारणश्च ॥

तथा —

केश्यस्सतिक्तो रूक्षोष्णो मधुरस्तुवरः कटुः ।
विषवीसर्पविस्फोटव्रणपित्तकफप्रणुत् ॥

फलं तु मधुरं तिक्तं शीतलं वातलं लघु ।
कषायं कटुकं पाके अग्निपित्तकफास्रजित् ॥

तत् पक्कं मधुरं स्निग्धं श्लेष्मलं शीतलं गुरु ।
विष्टम्भि बृंहणं रूक्षं वातपित्तकफास्रजित् ॥

भोंकरें सेळवंटीं ।

भूकर्च्चुदारो मधुरः क्रिमिदोषनिवारणः ।
वातप्रकोपनः किञ्चिच्छीतलः स्वर्णमारकः ॥

गोधणी ।

---

अथ नारिकेळः ।

नारिकेळो गुरुस्स्निग्धः शीतः पित्तविनाशनः ।
अर्धपक्वस्तृषाशोपशमनो दुर्जरः परम् ॥

नारेळ ।

---

१. P1, P2, T2, add the explanation द्विधा—- पक्वोऽपक्वश्च ।
२. J1. कफकारणश्च ।
३. P1, P2. भूकर्चुरोऽतिमधुरो ।

मधुरं मधुनारिकेळमुक्तं शिशिरं दाहतृषार्तिपित्तहारि ।
बलपुष्टिकरं च कान्तिमग्र्यां कुरुते वीर्यविवर्धनं च रुच्यम् ॥

किञ्च —

माध्वीकं नारिकेलीफलमतिमधुरं दुर्जरं जन्तुकारि
स्निग्धं वातातिसारश्रमशमनमथ भ्रंसनं वह्निदीप्तेः ।
आमश्लेष्मप्रकोपं जनयति कुरुते चारु कान्तिं बलं च
स्थैर्यं देहस्य दत्ते घनमदनकलावर्धनं पित्तनाशि ॥

सोह कोङ्कणे प्रसिद्धः ।

कर्बूरं नारिकेळस्य स्निग्धं गुरु च दुर्जरम् ।
दाहविष्टम्भदं रुच्यं बलवीर्यविवर्धनम् ॥

खोबरें ।

[इति नारिकेळः ।]

पूगं गुरु हिमं रूक्षं कषायं कफपित्तहृत्[1] ।
मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् ॥

आर्द्रं तद् गुर्वभिष्यन्दि वह्निदृष्टिहरं स्मृतम् ।
स्विन्नं दोषत्रयच्छेदि दृढमध्यं तदुत्तमम् ॥

पूगफल ।

सिन्दोळं कफवातपित्तशमनं रक्तातिसारापहं
पामाकुष्ठभगन्दरामशमनं तीव्राश्मरीभेदनम् ।
हृद्रोगेषु हितं सदा बलकरं कामाग्निसन्दीपनं
कासक्षीणविरेचने ज्वरगदे शस्तं च सिन्दीफलम् ॥

सिन्दोळी ।

ईषत्कषायमधुरा वातपित्तनिबर्हिणी ।
बल्या वृष्या च हृद्या च विशेषादुत्तती गुरुः ॥

उत्तती ।

---

१. J₁. कफपित्तकृत् ।

खर्जूरो रक्तपित्तं शमयति मधुरः स्वादुपाकेऽतिशीत-
स्तृष्णाशोषापहन्ता विषममदरुजाश्वासहिध्मापनोदी ।
स्निग्धो वृष्यो बलासं जनयति सुतरां सेवितश्चाभिहन्ता
रुच्यो हृद्यो नितान्तं श्रमजनितरुजं हन्ति सन्तर्पणेन ॥

खर्जूर ।

दाहघ्नो मधुरोऽस्रपित्तशमनस्तृष्णातिशोषापहः
स्निग्धः श्वासकफश्रमोदयहरः सन्तर्पणः पुष्टिदः
वह्नेर्मान्द्यकरो गुरुर्विषहरो हृद्यश्च दत्ते बलं
स्निग्धो वीर्यविवर्धनश्च कथितः पिण्डाख्यखर्जूरकः ॥

पेंडखर्जूर ।

दाडिमं मधुरमम्लकषायं कासवातकफपित्तविनाशि ।
ग्राहि दीपनकरं च लघूष्णं शीतलं श्रमहरं रुचिदायि ॥

दाडिमं द्विविधमीरितमार्यैरम्लमेकमपरं मधुरं च ।
तत्र वातकफकारि किलाम्लं तापहारि मधुरं लघु पथ्यम् ॥

दाडिम ।

द्राक्षातिमधुराम्ला च शीतापित्तार्तिदाहजित् ।
मूत्ररोधहरा रुच्या वृष्या सन्तर्पणी परा ॥

द्राक्षं ।

गोस्तनी मधुरा शीता हृद्या च मदहारिणी ।
दाहमूर्च्छाज्वरश्वासतृष्णाहृल्लासनाशिनी ॥

गोस्तनी ।

---

१. $J_1$. has this verse as follows

दाहघ्नी मधुराम्लपित्तशमनी तृष्णातिशोषापहा
शिध्माश्वासकफश्रमोदयहरा सन्तर्पणी पुष्टिदा ।
वह्नेर्मान्द्यकरी गुरुर्विषहरा हृद्या च दत्ते बलं
स्निग्धा वीर्यविवर्धिनी च कथिता पिण्डाख्यखर्जूरिका ॥

पिण्डखर्जूरी ।

२. $J_1$. शीतपित्तादिदाहजित् $P_1$. $P_2$. शीतपित्तातिदाहजित् ।

३. $J_1$. omits this verse.

अम्लसा मधुराम्ला च रसाला रुचिकारिणी ।
शिशिरा श्वासहृल्लासनाशिनी जनवल्लभा ॥

द्वीपद्राक्षे ।

द्राक्षाबालफलं कटूष्णविषदं पित्तास्रकोपप्रदं
मध्यं चाम्लरसं [1]देशान्तरगतं रुच्यं च वह्निप्रदम् ।
पक्वं चेन्मधुरं तथाम्लसहितं तृष्णास्रपित्तापहं
पक्वं शुष्कतमं श्रमार्तिशमनं सन्तर्पणं पुष्टिदम् ॥

अपि च ।

शीता पित्तास्रदोषं [2]दमयति मधुरा स्निग्धपाकातिरुच्या
चक्षुष्या श्वासकासश्रमविषशमनी शोफतृष्णाज्वरघ्नी ।
दाहाध्मानभ्रमादीनपनयति परा तर्पणी पक्वशुष्का
द्राक्षा सं[3]क्षीणवीर्यानपि मदनकला[4]केलियुक्तान् विधत्ते ॥

[5]द्राक्षा, अन्यमिति नामान्तरम् ।

[6]आमं भूपनसं रुच्यं कफपित्तकरं गुरु ।
अम्लमरोचकं हृद्यं श्रमक्लमनिबर्हणम् ॥

पक्वं तु पित्तहृत् स्वादु रसमातपदोषनुत् ॥

अनानस ।

कर्मारकोऽम्ल उष्णश्च वान्तिहृत् पित्तकारकः ।
पक्वस्तु मधुराम्लस्स्यात् बलपुष्टिरुचिप्रदः ॥

कमरख ।

---

१. J. दशान्तरगतम् ।

२. Bh. शमयति ।

३. $J_1$. सुक्षीण ।

४. केलिवृष्यान् ।

५. द्राक्षागुणः ।

६. $J_1$. omits this verse; $P_1$, $P_2$. आमं तु कैतकं रुच्यं Bh; आमं तु कौतुकं रुच्यं ।

अमृतफलं लघु वृष्यं सुस्वादु त्रीन् हरेद्दोषान् ।
देशेषु मुद्गलानां बहुलं तल्लभ्यते लोकैः ॥

अमृतफल ।

---

अथ बदराणि ।[1]

बदरं मधुरं कषायमम्लं परिपक्वं मधुराम्लमुष्णमेव ।
कफकृत् पवनातिसाररक्तश्रमशोषार्तिविनाशनं च रुच्यम् ॥

इति साधारण्येन ।

राजबदरस्तु मधुरः शिशिरो दाहार्तिपित्तवातहरः ।
वृष्यश्च वीर्यवृद्धिं कुरुते शोषश्रमानपहरति ॥

रायबोरें ।

भूबदरी मधुराम्ला कफवातविकारहारिणी पथ्या ।
दीपनपाचनकर्त्री किञ्चित्पित्तास्रकारिणी रुच्या ॥

भूबदरी ।

लघुबदरं मधुराम्लं पक्वं कफवातनाशनं रुच्यम् ।
स्निग्धं च जन्तुकारकमीषत्पित्तार्तिदाहशोषघ्नम् ॥

क्षुद्रबदरम् ।

पत्रं तु बादरं लेपे ज्वरदाहविनाशनम् ।
त्वचा विस्फोटशमनी बीजं नेत्रामयापहम् ॥

बदरपत्रादिगुणाः ।

बीजपूरफलमम्लकटूष्णं श्वासकासशमनं पवनघ्नम् ।
कण्ठशोधनकरं लघु हृद्यं दीपनं च रुचिकृत्पचनं च ॥

किञ्च —

बालं पित्तमरुत्कफप्रदमलं मध्यं च तादृग्विधं
पक्वं वर्णकरं च हृद्यमथ तत् पुष्णाति पुष्टिं बलम् ।[2]

---

१. $J_1$. अथ बदरगुणाः ।

२. $T_2$. भ्रमान् हरति ।

शूलाजीर्णविबन्धमारुतकफश्वासार्तिमन्दाग्निजित्
कासारोचकशोफशान्तिदमिदं स्यान्मातुलुङ्गं सदा ॥

त्वक् तिक्ता दुर्जरा स्यात् क्रिमिकफपवनध्वंसिनी स्निग्धमुष्णं
मूलं पित्त(प्रकोप)प्रशमनमखिलारोचकघ्नं च गौल्यम् ।
वातार्तिं कण्ठदाहं जठरगदहरं केसरं दीप्यमम्लं
बीजं तिक्तं कफार्शःश्वयथुशमकरं बीजपूरस्य पथ्यम् ॥

माहोलुङ्ग ।

अम्लः कटूष्णो वनबीजपूरो रुचिप्रदो वातविनाशनश्च ।
स्यादामदोषक्रिमिनाशकारी कफापहः श्वासनिषूदनश्च ॥

वनमाहोलुङ्ग ।

मधुकर्कटी तु मधुरा शिशिरा दाहनाशिनी ।
त्रिदोषशमनी रुच्या वृष्या च गुरुदुर्जरा ॥

मधुकाकडी ।

नारङ्गं मधुरं चाम्लं गुरूष्णं चैव रोचनम् ।

नारङ्ग ।

वातामं क्रिमिशूलघ्नं वृष्यं श्रमहरं परम् ।

वाताम, उत्तरे प्रसिद्धम् ।

निम्बूफलं प्रथितमम्लरसं कटूष्णं
गुल्मामवातहरमग्निविवृद्धिकारि ।
चक्षुष्यमेतदथ कासकफार्तिकण्ठ-
विच्छर्दिहारि परिपक्वमतीव रुच्यम् ॥

निम्बू ।

जम्बीरस्य फलं रसेऽम्लमधुरं वातापहं पित्तहृत्
पथ्यं पाचनरोचनं बलकरं वह्नेर्विवृद्धिप्रदम् ।

---

१. $J_1$. श्वासाग्निमन्दा ।

२. $J_1$. शोकशान्तिद ।

३. $T_1$. gives a note: हन्तीति शेषः in the margin,

४. $J_1$. वातामक्रिमि ...... परम् ॥ नारिङ्ग

पक्वं चेन्मधुरं कफार्तिशमनं पित्तास्रदोषापनुद्
वर्ण्यं वीर्यविवर्धनं च रुचिकृत् पुष्टिप्रदं तर्पणम् ॥

जम्बीर ।

मधुरो मधुजम्बीरः शिशिरः कफपित्तनुत् ।
शोषघ्नस्तर्पणो वृष्यः श्रमघ्नः पुष्टिकारकः ॥

साखरनिम्बू ।

अम्लवेतफलं चोष्णं तीक्ष्णं स्निग्धं च दीपनम् ।
बद्धमूलानपि व्याधीन् भिन्द्याद्वज्रं गिरीनिव ।
संशूलानाहविष्टम्भान् जयेद्वातकफामयान् ॥

अम्लवेतसमम्लं च तीक्ष्णोष्णं भेदनं लघु ।
दीपनं पाचनं हृद्यं कफपित्तास्रदूषणम् ॥

रूक्षं विण्मूत्रदोषघ्नं हृद्रोगाध्मानशूलजित् ।
हिध्मानाहानिलश्वासकासशूलवमिप्रणुत् ॥

द्रवीभवत्यजामांसं मलवस्त्रं सितं भवेत् ।
चणकाम्लोपमं स्वादु साम्लं स्यादग्निदीपनम् ॥

अम्लवेतस ।

साराम्लमामवातघ्नं कफपित्तकरं गुरु ।

साराम्ल ।

चौरं स्वादु कषायाम्लं रूक्षं गुर्वास्यशोधनम् ।
विशदं रोचनं हृद्यं शीतलं ग्राहि वातलम्[1] ॥
छर्द्यरुक्कफपित्तघ्नं विष्टम्भाध्मानबन्धनुत् ।

चोरनिम्बू ।

कपित्थो मधुराम्लश्च कषायस्तिक्तशीतलः ।
वृष्यः पित्तानिलं हन्ति संग्राही व्रणनाशनः ॥

---

१. P1. P2. वातलं गुरु । T2. ग्राहि वालकम् ।

किञ्च —

कपित्थमाममस्लोष्णं कण्ठघ्नं ग्राहि वातलम् ।
दोषत्रयहरं पक्कं मधुराम्लरसं गुरु ॥

कंवीठ ।

आमलकं कषायाम्लं मधुरं शीतलं लघु ।
दाहपित्तवमीमेहशोषघ्नं च रसायनम् ॥[1]

आवला ।

काष्ठधात्रीफलं स्वादु कषायकटुकं तथा ।
शीतपित्तास्रदोषघ्नं पूर्वोक्तैरधिकं गुणैः ॥

काष्ठावला ।

प्राचीनामलकं रुच्यमुष्णं गुरु मलापहम् ।
वातघ्नं पित्तकफहृत् पक्कं तुवरपीलुवत् ॥

पाणीआवला ।

लवलीफलमस्रार्शःकफपित्तहरं गुरु ।
विशदं रोचनं रूक्षं स्वाद्वम्लतुवरं रसे ॥

रायआवला ।

चारः पित्तकफास्रघ्नः तत्फलं मधुरं गुरु ।
स्निग्धं सरं मरुत्पित्तदाहज्वरतृषापहम् ॥
प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ।
हृद्योऽतिदुर्जरः स्निग्धो विष्टम्भी चामवर्धनः ॥[2]

चारोळ्या ।

क्षीरिकायाः फलं वृष्यं बल्यं स्निग्धं हिमं गुरु ।
तृष्णामूर्च्छामदभ्रान्तिक्षयदोषत्रयास्रजित् ॥

खिरणी ।

---

१. P1. P2. प्रमीमेह ।
२. P1, बलवर्धनः ।

आम्रातकं कषायाम्लमामं हृत्कण्ठकर्षणम् ।
पक्वं तु मधुराम्लाख्यं स्निग्धं किञ्चित्कफापहम् ॥

आंबाडे ।

चिञ्चात्यम्ला भवेदामा पक्वा तु मधुराम्लिका ।
वातघ्नी पित्तदाहास्त्रकफदोषप्रकोपिनी ॥

तथा —

पक्वं तु मधुराम्लं स्याद् भेदि विष्टम्भवातजित् ।
पक्वचिञ्चाफलरसो मधुरोऽम्लो रुचिप्रदः ॥

शोफपाककरो लेपे[1] व्रणदोषविनाशनः ।
चिञ्चापत्रं तु शोफघ्नं रक्तदोषव्यथापहम् ॥

तस्य शुष्कत्वचः क्षारः शूलमन्दाग्निनाशनः ।

इति चिञ्चा ।

दीपनं गुरु सङ्ग्राहि स्निग्धं बैल्वं तु कोमलम् ।
तदेव पक्वं विज्ञेयं मधुरानुरसं गुरु ॥

कटुतिक्तकषायोष्णं संग्राहि च त्रिदोषजित् ।
काञ्जिके संस्थितं बिल्वमग्निसन्दीपनं परम् ॥

हृद्यं रुचिकरं प्रोक्तमामवातविनाशनम् ॥

बिल्वफल ।

सल्लकी[2] तिक्तमधुरा कषाया ग्राहिणी परा ।
कुष्ठास्त्रकफवातार्शोव्रणदोषार्तिनाशिनी ॥

सौलफल[3] ।

कार्कटं तु फलं रुच्यं कषायं दीपनं परम् ।
कफपित्तहरं ग्राहि चक्षुष्यं लघु शीतलम् ॥

काकडे ।

---

१. J1: Bh लेपो ।
२. P1. J1. सच्छकी. P2. मच्छकी ।
३. J1. साइल ।

जम्बूः कषायमधुरा श्रमपित्तदाह-
कण्ठार्तिदोषशमनी क्रिमिदोषहन्त्री ।
श्वासातिसारकफकासविनाशिनी च
विष्टम्भदा त्वपि च रोचनपाचनी च ॥

जांबूळ ।

विकण्टकः कषायः स्यात् कटुरूक्षो रुचिप्रदः ।
दीपनः कफहारी च वस्त्ररङ्गविधायकः ॥

हंसीफल, वारतोंडे इति नामान्तरम् ।

स्वादुपाक्यार्द्रमरिचं वातहृत्कफकृद् गुरु ।

आर्द्रमरीच ।

करीरः कटुकस्तीक्ष्णः छेद्युष्णो भेदनो जयेत् ।
दुर्नामकफवातामगरशोफक्रिमिव्रणान् ॥

तस्य पुष्पं तु तुवरं वातकृत्कफपित्तजित् ।
फलं तिक्तं कषायोष्णं कटुकं रसपाकयोः ॥

विकारि मधुरं रूक्षं संग्राहि कफपित्तजित् ।

नेपतीं ।

फांपटस्य फलं तिक्तं श्लेष्मलं क्रिमिनाशनम् ।
पित्तलं[1] गुरु विष्टम्भि रुच्यं चार्ष्ण्यं परं स्मृतम् ॥

फांवेंट ।

जीवन्तीफलमत्यर्थं मधुरं बृंहणं गुरु ।

दोडी ।

एरण्डफलमत्युष्णं गुल्मशूलानिलापहम् ।
यकृत्प्लीहोदरार्शोघ्नं कटुकं दीपनं परम् ॥

एरण्डफल ।

---

1. T2. omits this line.

तूदं गुरु सरं चाम्लमामं तद्रक्तपित्तलम् ।
उष्णं पक्वं तु मधुरं शीतपित्तानिलापहम् ॥

तूत ।

कर्कटं तुवरं साम्लं गुरूष्णं रक्तपित्तलम् ।
सरं वातहरं श्लेष्महृत्पक्वं नास्रपित्तलम् ॥

मृगलेण्डिक ।

---

## अथ हरीतकीप्रकरणम् ।

तोदनं लघु संग्राहि साम्लोष्णं वह्निपित्तकृत् ।
स्निग्धं पक्वं तु मधुरं कषायं कफवातजित् ॥

तोरणं ।

विजया रोहिणी चैव पूतना चामृताभया ।
जीवन्ती चेतकी चैव नाम्ना सप्तविधा स्मृता ॥

अलाबुनाभिर्विजया सुवृत्ता रोहिणी स्मृता ।

स्वल्पत्वक् पूतना ज्ञेया स्थूलान्या साऽमृता मता ।
पञ्चास्रा चाभया ज्ञेया जीवन्ती स्वर्णवर्णभाक् ॥

त्र्यस्रां तु चेतकीं विद्यादित्यासां रूपलक्षणम् ।

विन्ध्याद्रौ विजया हिमाचलभवा स्याच्चेतकी पूतना
सिन्धौ स्यादथ रोहिणी तु विजया जाता प्रतिस्थानके[1] ।
चम्पायाममृताभया च जनिता देशे सुराष्ट्राह्वये
जीवन्तीति हरीतकी निगदिता सप्तप्रभेदा बुधैः ॥

सर्वप्रयोगे विजया च रोहिणी क्षतेषु लेपेषु तु पूतनोदिता ।
विरेचने स्यादमृता गुणाधिका जीवन्तिका स्यादिह जीर्णरोगजित् ॥

---

१. T2, Bh, P1, P2. प्रतिष्ठानके ।

स्याच्चेतकी सर्वरुजापहारिका नेत्रामयघ्नीमभयां वदन्ति ।
इत्थं यथायोगमियं प्रयोजिता ज्ञेया गुणाढ्या न कदाचिदन्यथा ॥

चेतकी च धृता हस्ते यावत्तिष्ठति देहिनः ।
तावद्विरिच्यते वेगात्प्रभावान्नात्र संशयः ॥

सप्तानामपि जातीनां प्रधानं विजया स्मृता ।
सुखप्रयोगसुलभा सर्वव्याधिषु शस्यते ॥

क्षिप्ताप्सु निमज्जति या सा ज्ञेया गुणवती भिषग्वर्यैः ।
कालयोगात्स्वयं पक्वा निपतेद्या महीतले ।

नवा स्निग्धायता वृत्ता गुर्वी क्षिप्ता तथाम्भसि ।
निमज्येद्या तथैकस्मिन् फले चैव द्विकर्षता ॥

सर्वदा गुणकृत्सा तु ततोऽन्या तु विवर्जिता ।
जन्तुदिग्धां दावदग्धां जले पङ्के स्थितां पुनः ॥

ऊखरे चास्थितां भिन्नां वर्जयेत्तु हरीतकीम् ।
स्वाद्वम्लभावात् पवनं कटुतिक्ततया कफम् ॥

कषायमधुरत्वाच्च पित्तं हन्ति हरीतकी ।
मज्जत्वक्स्नायुमांसास्थिस्थिताः पञ्चाभयोद्भवाः ॥

स्वादुकट्वम्लतिक्ताख्याः कषायाः क्रमशो रसाः ।
पथ्यो मज्जा च चक्षुष्यो वातपित्तहरो गुरुः ॥

हरति प्रसभं व्याधीन् भूयस्तकति यद्वपुः ।
हरीतकीति सा प्रोक्ता तकतिर्दीप्तिवाचकः ॥

हरीतकी तु तृष्णायां हनुस्तम्भे गळग्रहे ।
शोषे नवज्वरे क्षीणे गुर्विण्यां नैव शस्यते ॥

---

१. P1; P2; T2. शोषे नवज्वरे T2. Gives another reading also. शोषे नवज्वरे इति केचित् ॥

हिमाद्रिजायाश्च हिमाद्रिजाया गुणान् समग्रान् यदि वेद वेदः ।
धन्वन्तरिर्यत्र तरिर्न देवो भवे भवेद् भूरिभवो भवोऽपि ॥

गुणान्तराणि ग्रन्थान्तरतोऽवधेयानि ।

इति हरीतकीप्रकरणम् ।

---

अक्षं कषायं मधुरं पाके पित्तकफापहम् ।
उष्णवीर्यं हिमस्पर्शं केश्यं वैस्वर्यजन्तुजित् ॥
चक्षुष्यं भेदनं रूक्षं लघु कासविनाशनम् ।
अक्षमज्जा मदकरः कफमारुतनाशनः ॥

व्याहडे ।

आक्षोटकं सरं स्निग्धं मधुरं रसपाकयोः ।
गुरूष्णं बृंहणं वृष्यं बल्यं विष्टम्भि रोचनम् ॥
हृद्यं क्षयासपवनदाहघ्नं रक्तपित्तलम् ।

अकरोटें ।

वाताम उष्णस्तुस्निग्धो वातघ्नश्शुक्रकृद् गुरुः ।
वातामम‍ज्जा मधुरो वृष्यः पित्तानिलापहः ॥

स्निग्धोऽम्लकफकृच्चेष्टो रक्तपित्तविकारिणाम् ।

वदाम ।

सेवं समीरपित्तघ्नं बृंहणं कफकृद् गुरु ।
रसे पाके च मधुरं शिशिरं रुचिशुक्रकृत् ॥

सेव ।

फलं तालस्य मधुरं गुरु स्निग्धं हिमं सरम् ।
विष्टम्भि बृंहणं वृष्यं तर्पणं कफमांसकृत् ॥

सरं विष्टम्भीति विशेषणद्वयं संग्रहणीकरत्वं बोधयति ।

बीजं स्वादु रसे पाके मूत्रलं वातपित्तजित् ॥
पक्कं तालफलं पित्तं श्लेष्मरक्तविवर्धनम् ।
दुर्जरं बहुमूत्रं च तन्द्राभिष्यन्दशुक्रलम् ।

---

1. J1, Bh. omit सरं ... ... ... बोधयति ।

तालमज्जा तु तरुणः किञ्चिन्मदकरो लघुः ।
श्लेष्मलो वातपित्तघ्नः सस्नेहमधुरस्सरः ॥

तालजं तरुणतोयमतीव प्राणिनां मदविकारकरं तु ।
अम्लभावमुपयाति यदा तत्पित्तकृत्पवनदोषहरं च ॥

तालगुणाः ।

सीताफलं सुमधुरं शीतलं पित्तनाशनम् ।
सुपक्वं रुचिकृद्वाते हितं न कफकृत्परम् ॥

सीताफलम् ।

---

## अथाम्रप्रकरणम् ।

आम्रः कषायाम्लरसः सुगन्धिः कण्ठामयघ्नोष्णकरश्च बालः ।
पित्तप्रकोपानिलरक्तदोषप्रदः कटुत्वादरुचिप्रदश्च[1] ॥

बालाम्बा ।

अपिच —

बालं पित्तानिलकफहरं तच्च बद्धास्थि तादृक्
पक्वं दोषत्रितयशमनं स्वादु पुष्टिप्रदं च ।
दत्ते धातुप्रचयमधिकं तर्पणं कान्तिकारि
ख्यातं तृष्णाप्रशमनमथो साहकारं फलं स्यात् ॥

ते च त्रिविधाः । राजाम्रमहाराजाम्ररसाम्लभेदात् ।

राजाम्राः कोमलास्सर्वे कट्वम्लाः पित्तदाहकाः ।
सुपक्वास्स्वादुमाधुर्यपुष्टिवीर्यबलप्रदाः ॥

तत्राम्रेषु त्रिषु प्रोक्तं साम्यमेव रसोच्चयात् ।
गुणाधिक्यं तु विज्ञेयं पर्यायादुत्तरोत्तरम् ॥

किञ्च —

बालं राजफलं कफास्रपवनश्वासातिपित्तप्रदं
मध्यं तादृशमेव दोषबहुलं भूयः कषायाम्लकम् ।

---

1, $P_1$- कटुत्वाच रुचिप्रदश्च । $T_2$, $P_1$, $P_2$. add उष्णकरः दाहकृच ।

पक्वं चेन्मधुरं त्रिदोषशमनं तृष्णाविदाहश्रम-
श्वासारोचकमोचकं गुरु हिमं वृष्यं च चूताह्वयम् ॥

आम्रत्वचा कषाया च मूलं सौगन्धि तादृशम् ।
रुच्यं सङ्ग्राहि शिशिरं पुष्पं तु रुचिदीपनम् ॥

अतिसारहरं पित्तप्रमेहकफनुत् परम् ।
असृग्दुष्टिहरं शीतं रुचिकृद् ग्राहि शीतलम् ॥

आम्रमामं त्वचाहीनमातपेऽतीव शोषितम् ।
अम्लं स्वादु कषायं स्याद् भेदनं कफवातजित् ॥

पक्वं तु मधुरं वृष्यं स्निग्धं गुरु बलप्रदम् ।
गुरु वातहरं हृद्यं वर्ण्यं शीतमपित्तलम् ॥

कषायानुरसं वह्निश्लेष्मशुक्रविवर्धनम् ।
तदेव वृक्षसंपक्वं गुरु वातहरं परम् ॥

मधुराम्लरसं किञ्चिद् भवेत्पित्तप्रकोपनम् ।
आम्रं कृत्रिमपक्वं यत् तद्भवेत्पित्तनाशनम् ॥

रसस्याम्लस्य हानेश्च माधुर्याच्च विशेषतः ।
चूषितं तत्परं रुच्यं बलवीर्यकरं लघु ॥

शीतलं शीघ्रपाकि स्याद् वातपित्तहरं परम् ।
तद्रसो गालितो बल्यो गुरुर्वातहरस्सरः ॥

अहृद्यस्तर्पणोऽतीव बृंहणः कफवर्धनः ।
तस्य खण्डं गुरु परं रोचनं चिरपाकि च ॥

मधुरं बृंहणं बल्यं शीतलं वातनाशनम् ।

तथा —

वातपित्तहरं रुच्यं बृंहणं बलवर्धनम् ।
वृष्यं वर्णकरं स्वादु दुग्धयुग्गुरु शीतलम् ॥

मन्दानलत्वं विषमज्वरं च रक्तामयं बद्धगुदोदरं च ।
आम्रातियोगो नयनामयं च करोति तस्मादति तानि नाद्यात् ॥

पक्वस्य सहकारस्य कटविस्तारितो रसः ।
घर्मशुष्को मुहुर्दत्त आम्रातक इति स्मृतः ॥

आम्रावर्तस्तृषाच्छर्दिवातपित्तहरस्स्मृतः ।
[1]रुच्यस्सूर्यांशुभिः पाकाल्लघुश्च स हि कीर्तितः ॥

आम्रपोळी ।

आम्रबीजं कषायं स्याल्लघ्वतीसारनाशनम् ।
ईषदम्लं च मधुरं तथा हृदयदाहनुत् ॥

आम्रस्य पल्लवं रुच्यं कफपित्तविनाशनम् ।

इत्याम्रप्रकरणम् ॥

---

कोशाम्रमम्लमनिलापहरं कफार्ति-
पित्तप्रदं गुरु विदाहि विशोफकारि ।
पक्वं भवेन्मधुरमीषदपारमम्लं
कण्डूतियुक् च रुचिदीपनपुष्टिबल्यम् ॥

कोशाम्र, आंबसोल[2] ।

पिण्डारं शीतलं बल्यं पित्तघ्नं रुचिकारकम् ।
पाके लघु विशेषेण विषशान्तिकरं स्मृतम् ॥

पिण्डारें ।

[3]वातकुंभफलं ग्राहि कफवातप्रकोपनम् ।
तदेव पक्वं मधुरं पित्तघ्नं रोचनं गुरु ॥

पोपया ।

अथ साधारण्येन फलगुणाः —

फलेषु परिपक्वं यद् गुणवत्तदुदाहृतम् ।
बिल्वादन्यत्र विज्ञेयमामं तद्धि गुणाधिकम् ॥

---

१. $T_2$. रुच्यः शीतांशुभिः ।

२. $T_1$., $J_1$. omit this name, $P_1$. $P_2$. आम्मोल ।

३. $J_1$. omits this verse.

फलतुल्यगुणं सर्वं मज्जानमपि निर्दिशेत् ।
फलं हिमादिदुर्वातव्याळकीटादिदूषितम् ॥
अकालजं कुभूजं च पाकातीतं न भक्षयेत् ॥

इति फलवर्गः ॥

---

## अथ काण्डीरः ।

काण्डीरः कटुतिक्तोष्णः सरो दृष्टिव्रणार्तिनुत् ।
लूतगुल्मोदरप्लीहशूलमन्दाग्निनाशनः ॥

काण्डवेलि ।

रुच्यं रूक्षं ग्राहि वृष्यं वातलं वह्निसादनम् ।
ईषत्कषायं स्वाद्वस्रपित्तप्रदरमेहजित् ॥
प्रोक्तं रम्भागर्भकाण्डं श्लेष्मलं वह्निसादनम् ।

बालदण्ड ।

तीक्ष्णोष्णं सार्षपं नाळं वातश्लेष्मव्रणापहम् ।
कटु क्रिमिहरं कण्डूकुष्ठघ्नं रुचिकारकम् ॥

सर्षपनाळ ।

सर्वे संस्वेदजाश्शीताः दोषलाः[2] पिच्छलाश्च ते ।
गुरवश्छर्द्यतीसारज्वरश्लेष्मामयप्रदाः ॥
भृङ्गच्छल्ली कटूष्णा च तिक्ता रोचनदीपनी ।

भोवरसालि ।

---

## अथ पुष्पाणि ।

निहन्याद्बिल्वजं पुष्पमतीसारं तृषां वमिम् ।

बिल्वपुष्पम् ।

---

1. P2. वातघ्नं ।
2. P1. पित्तला ।

श्रीपर्णीकुसुमं शीतं तिक्तं सङ्ग्राहि वातलम् ।
कषायं मधुरं पाके पित्तास्रासृग्दरापहम्[1] ॥

श्रीपर्णीपुष्पम् ।

पाटलाकुसुमं हृद्यं कषायमधुरं हिमम् ।
हिध्माकफातिसारघ्नं शोषघ्नं वारित्रासनम् ॥

पाटलीपुष्पं ।

निर्गुण्डिपुष्पं तिक्तोष्णं क्रिमिवातकफापहम् ।
गुल्मप्लीहारुचिं कुष्ठं कण्डूं शोफं जयेत्कटु ॥

निर्गुण्डीपुष्पं ।

पुष्पमाखुविषं हन्यात् कपित्थस्य विशेषतः ।

कावठफूल ।

माधूकं मधुरं शीतमहृद्यं बृंहणं गुरु ॥

माधूकपुष्प ।

शाल्मलीपुष्पशाकं तु घृतसैन्धवसाधितम् ।
प्रदरं नाशयत्याशु दुस्साध्यं च न संशयः ॥

रसे पाके च मधुरं कषायं शीतलं गुरु ।
कफपित्तास्रजिद् ग्राहि वातलं च प्रकीर्तितम् ॥

शाल्मलीपुष्प ।

इति पुष्पाणि ।

---

## अथ कवकम् ।

भूस्फोटं कवकं छत्रं भूमिच्छत्रं शिलान्ध्रकम् ।
क्षितिगोमयकाष्ठेषु वृक्षादिषु च तद्भवेत् ॥

श्रेष्ठाश्शुचिस्थलीकाष्ठवंशगोव्रजसम्भवाः ।
नातिदोषकरास्ते स्युः शेषास्तेभ्यो विगर्हिताः ॥

भूकन्दस्त्वतिदोषलँ इति वाग्भटः । भूकन्दः भूस्फोटः कवक इति यावत् ।

इति कवकानि ॥

---

1. P1. P2. सगुज्वरापहम् ।

## अथ हारीतप्रकरणम् ।

तत्र —

रुच्यं चूतफलोद्भूतं हारीतं वातजिद् गुरु ।
पित्तश्लेष्मकरं वह्निमान्द्यकारि विकारि च ॥

आम्रहरीतकम् ।

स्थौल्यकान्तिकरं बैम्बं हरितं वातपित्तजित् ।

तोण्डल्याचें ।

हरितं मूलकोद्भूतं लघूष्णं स्वादु पाकतः ॥
गुल्मशूलक्षयहरं रुच्यं दोषहरं परम् ।

मूलकहरित ।

रुच्यग्निकृत् क्रिमिश्लेष्मकुष्ठजित्कारवेलकम् ॥

कारल्यांचे ।

रम्भाकाण्डकृतं दाहपित्तास्रघ्नं कफप्रदम् ।
कषायकटुतिक्तोष्णं रूक्षं गुर्वग्निसादनम् ॥
वातघ्नं च .... ... ... ... ।

रम्भाकाण्डजम् ।

रुच्यं सुगन्धं कैडर्यपत्रजं सर्वदोषनुत् ।

कृष्णनिम्बस्य ।

शृङ्गबेरं सलवणं स्तम्भशोफानिलापहम् ।
जिह्वाजाड्यहरं वृष्यं रोचनं दीपनं लघु ॥
जम्बीराक्तं सलवणं हरितं शृङ्गबेरजम् ।
रुच्यं श्लेष्मानिलप्लीहकण्ठरोगहरं परम् ॥
आर्द्रकं सगुडं बल्यं वातश्लेष्मघ्नमग्निदम् ।
आर्द्रचिञ्चाफलैर्युक्तं दीपनं कफकोपनम् ॥

बालार्द्रकस्य ।

शृङ्गबेरं त्रिदोषघ्नं शोफगुल्मक्षयापहम् ।
शूलानाहार्शसां पथ्यं वृष्यं बल्यं रुचिप्रदम् ॥

प्रौढार्द्रकस्य ।

गजकर्णीकन्दभवं तीक्ष्णोष्णं शीतिकापहम् ।
कटुकं कफवातघ्नं विपरीतं कुष्ठनुत् ।
प्रशस्यते पाण्डुशोफक्रिम्यानाहव्रणार्शसाम् ॥

गजकर्णीभवम् ।

कूश्माण्डखण्डसम्भूतं सूक्ष्मं हरितकं जयेत् ।
वातपित्तामयान् सर्वान् पीनसघ्नं रुचिप्रदम् ॥

कूश्माण्डजम् ।

असिशिम्बेश्च फलकं कोमलं सूक्ष्मखण्डितम् ।
अग्निमान्द्यकरं किञ्चिद् वातघ्नं हरितं कृतम् ॥

खराशिंबीकृतम् ।

वृन्ताकं खण्डितं सूक्ष्मं शृङ्गबेराम्लमिश्रितम् ।
भावितं हिङ्गुमरिचैः पटुयुग्वातदोषनुत् ॥

वृन्ताकस्य ।

कफहरमरुचिघ्नं बालवृन्ताकजातं
क्षयभवविकृतिघ्नं पित्तजिच्छर्कराढ्यम् ।

बालवृन्ताकस्य ।

माकन्दिकायाश्शकलैस्सुसूक्ष्मै-
श्श्लक्ष्णैस्सुसम्भारसुसंयुतैश्च ।
जयेदवश्यं कफजान् विकारान्
मान्द्यं कृशानोरतिमारुतं च ॥

माइणीमूलजम् ।

पारेवतफलैः पक्वैः कृतं हरितकं बलम् ।
करोति दीपयत्यग्निं सुसम्भारं रुचिप्रदम् ॥

उत्तीभवम् ।

तोयमागधिकोद्भूतं हरितं नीरसं कटु ।
तृष्णाग्निजननं सातिसारश्लेष्मविनाशनम् ॥

जलपिंपलीभवम् ।

कदलीफलसम्भूतच्छल्लिभिः खण्डशः कृतैः ।
सूक्ष्मं हरितकं सर्वसम्भारैर्वातपित्तजित् ॥

कादळछल्लीजम् ।

सारिवाहरितमूलखण्डितै-
निर्मितं हरितकं समीरणम् ।
हन्ति सर्वकफजान् महागदान्
पीतमत्यनिलवृद्धिकारणम् ॥

वनमाइणमूलजम् ।

त्रपुसाज्जातहरितं नानाविधकफामयान् ।
करोति कृच्छ्रदोपार्तिं सम्भारसहितं जयेत् ॥

सर्ववालुकानाम् ।

महाबदरसम्भूतं साम्लं हरितकं जयेत् ।
मन्दाग्निं वातरोगं च शिरोरोगैककारणम् ॥

महाबदरजम् ।

हरीतकं परं हृद्यं स्वादु कोशातकीभवम् ।
फलोर्ध्वदंष्ट्रसम्भूतनिःशेषव्याधिदोषजित् ॥

दोडक्याचें ।

पथ्यं पटोलहरितं क्षाराम्ललवणान्वितम् ।
कफपित्तहरं रुच्यं किञ्चिद्गुरु समीरजित् ॥

पटोलभवम् ।

इति हरितप्रकरणम् ॥

---

अथोपदंशाः ।

तत्र —

स्वाद्वम्लं विशदं हृद्यं तीक्ष्णोष्णं भक्तरोचनम् ।
स्निग्धं सुगन्धं नारङ्गं बल्यं श्लेष्मानिलक्रिमीन् ॥

जयेदरुचिसप्लीहश्रमान् गुर्वग्निकृत्सरम् ।

नारङ्गम् ।

जाम्बीरं स्यादम्लतीक्ष्णं सुगन्धं दन्तहर्षणम् ।
रोचनं दीपनं भक्तपाचनं मुखशोधनम् ॥

तृष्णाशूलकफक्लेशच्छर्दिश्वासक्रिमिप्रणुत् ।
वातश्लेष्मविबन्धघ्नं वर्ण्यं बलकरं परम् ॥

जाम्बीरम् ।

मधुरो मधुजम्बीरः शिशिरः कफपित्तजित् ॥
पुष्टिकृत्तर्पणो वृष्यः श्रमतृड्दाहदोषजित् ॥

मधुजम्बीरभवम् ।

अम्लं कटूष्णं निम्बूकं गुल्मश्लेष्मामवातजित् ।
वर्ण्यं रुच्यग्निकृत्पक्वं कण्ठरुक्च्छर्दिकासजित् ॥

बालं त्रिदोषास्रकरं मध्यं तादृग्विधं भवेत् ।

निम्बू ।

त्वक् तिक्ता कटुका स्निग्धा मातुलुङ्गस्य वातजित् ।
श्लेष्मघ्नी क्रिमिजिद् गुर्वी देहे सौगन्ध्यकारिणी ॥

बृंहणं मधुरं मांसं वातपित्तहरं गुरु ।
शीतलं श्लेष्मलं वातश्रमतृड्दाहनाशनम् ॥

लघु तत्केसरं कासश्वासहिध्मामदात्ययान् ।
हन्ति शोफानिलश्लेष्मविबन्धच्छर्द्यरोचकान् ॥

गुल्मोदरार्शश्शूलानि मन्दाग्नित्वं च नाशयेत् ।

महालुङ्ग ।

सहकारफलं बालं कषायाम्लं कफप्रणुत् ।
वातपित्तहरं रूक्षं पीनसारुचिकृद् गुरु ॥

बालाम्र ।

---

१. P1. श्रम ...... मोहजित् ।

क्षुद्राम्रं बालमम्लोष्णं कटु पाके समीरजित् ।
कफपित्तहरं रुच्यं कटूष्णं रक्तशोषणम् ॥

क्षुद्राम्रम् ।

लवणाम्रफलं रुच्यं दीपनं वातनाशनम् ।
श्रमक्लमहरं हृद्यं मदमूर्च्छाप्रलापजित् ॥

लवणाम्रफलम् ।

माविकाम्ला कषायोष्णा कण्ठ्या वातबलासजित् ।
रुच्याग्निदीपनी वर्ण्या व्रणे कण्ठामये हिता ॥

आवाडें ।

हृद्यं तिक्तं ज्वरश्वासकासकण्डूतिकुष्ठजित् ।
कफपित्तारुचीन् हन्ति वातलं कटुकीफलम् ॥

सोंडेकाई ।

पित्तलं गुरु विष्टम्भि पक्वं कटुकिकाफलम् ।

पक्वसोंडेकाई ।

अलर्कस्तिक्ततीक्ष्णोष्णः शोफानिलकफक्रिमीन् ।
प्लीहगुल्मश्वासकासकण्डूदुर्नामपीनसान् ॥

हिक्काऽरुच्यान्त्रशूलार्शोमदोल्वणविषान् जयेत् ।
अलर्क; मूलसोंडेकाई । गोरखिरिंगणीति महाराष्ट्रः ।

अक्षीयस्य फलं तिक्तं कषायं कफवातजित् ।
वीसर्पव्रणगुल्मामरक्तातीसारमेहजित् ॥

व्याहडे ।

कषायतिक्तं कतकं फलं शीतं सरं लघु ।
पित्तास्रमेहतृट्शोषविषवाताक्षिरोगजित् ॥

पक्वं तु कतकं तिक्तकषायं स्वादु पिच्छलम् ।
चक्षुष्यं दीपनं श्लेष्मपित्ततृड्विषमेहजित् ॥

चिलबीज ।

---

१. P1. P2. अक्षीर.

बालं बैल्वं लघु ग्राहि स्निग्धं तिक्तं कषायकम् ।
वातश्लेष्मज्वरच्छर्दिहिध्मातीसारगुल्मजित् ॥

तीक्ष्णं पित्तकरं तत्र पक्वं तत्[1] स्वादु पिच्छलम् ।
दुर्जरं दोषलं ग्राहि स्निग्धोष्णं पूतिमारुतम् ।

बिल्वफळ ।

धात्री पथ्या समगुणा कषायाम्ला रसायनम् ।
मधुरानुरसा शीता केश्या वृष्या त्रिदोषहा ॥

रक्तास्रपित्तदृग्दाहहृत्कण्ठ्या त्वक्प्रसादिनी ।
विबन्धाध्मानविष्टम्भवान्ति[2]श्रमहरा सरा ॥

निहन्याद् वातमम्लत्वात् पित्तं मधुरपाकतः ।
कफं रूक्षकषायत्वात् सर्वेभ्योऽप्यधिका च सा ॥

आवळें ।

कषायतिक्तं रोचिष्णु सुगन्धि गुरु शीतलम् ।
श्लेष्मघ्नं पित्तहृद्रुच्यं कोमलं सल्लकीफलम् ॥

साळफळ ।

तिक्तं कटूष्णं [3]पफणं दीपनं कफवातजित् ।
हन्ति गुल्मं क्रिमीन् शूलमर्शः कोष्ठामयव्रणान् ॥

फांपटें ।

श्लेष्मातकफलं स्वादु कटुकं गुरु पिच्छलम् ।
वातघ्नं श्लेष्मलं कण्ठ्यं केश्यं वर्ण्यं विषापहम् ॥

महाश्लेष्मफलं तद्वद् दीपनं श्लेष्मवातजित् ।
पित्तकृच्छ्लेष्मलं रुच्यं वृष्यं कोष्ठक्रिमिव्रणनुद् ॥

भोंकरें ।

---

१. $T_2$. तत्साधु पिच्छलम्.

२. $P_1$. श्रम.

३. $P_1$. फफणं. $T_2$. पफणं.

पाके रसे कटुस्तिक्तः कषायो रक्तदूषणः ।
रूक्षो रुच्यः श्लेष्मकृमीन् हन्ति वंशकरीरकः ॥

वंशांकुर ।

शीता तिक्ता कटुस्स्वाद्वी रुच्या ग्राह्यल्पवातकृत् ।
माकन्दयक्ष्यांग्निकृद् बल्या रक्तपित्तविसर्पजित् ॥

तृट्कफारुचिपित्तघ्नी शीता त्वेषा गुणाधिका ।

मायणीमूल ।

तिक्ता कटूष्णा भ्रमरी रोचनी दीपनी लघुः ॥

भौंवरिसालि ।

इत्युपदंशाः ।

---

अथ कर्च्यः ।

चिर्भिटस्य फलं शुष्कं स्नेहभृष्टं कटूत्कटम् ।
अत्यम्बुपानदोषघ्नं सुगन्धि रुचिकृल्लघु ॥

चिभट ।

कासराख्यफलं शुष्कं भृष्टं वा पक्वमेव वा ।
दीपनं रोचनं तिक्तं कट्वम्लं पित्तलं विदुः ॥

कढोंची ।

कारवल्लीशुष्कफलं कासघ्नं वेध्मवर्त्मजित् ।

कारवल्ली ।

बृहतीद्वयसम्भूतं फलं शुष्कं सुपाचितम् ।
भृष्टं वाग्निकरं वातपित्तलं कफवातजित् ॥

डोरली । रिङ्गणी

शुष्कवार्ताकफलजा तैलभृष्टा रुचिप्रदा ।

वार्ताकफलजा ।

---

१. P1, P2. कटूष्णं.
२. T1 वर्त्मवृद्धिजित् ।

शमीफलं तु संशुष्कं वातघ्नं शूलगुल्मजित् ॥

शमीच्यासेंगए।

श्वेतारिमेदसम्भूतं फलं शुष्कं प्रमेहजित्।

हिंवराच्य,सेंगा।

परिशुष्कं सर्वशाकं कार्श्यविष्टम्भवातकृत्।

सर्वशुष्कशाकगुणाः।

इति कर्चरीप्रकरणम्।

---

अथ सम्भाराः।

तत्र सर्षपगुणाः शिम्बीधान्येषूक्ताः।

एला तिक्तोष्णकटुका लघ्वी वातकफापहा।
श्वासाङ्गमर्दहृल्लासमूत्रकृच्छ्रविषप्रणुत् ॥

मुखवैरस्यजित् वृष्या हृद्या गर्भविरोधिनी।
दीपनी पाचनी मेध्या व्रणार्शःकण्डुकासजित् ॥

एला।

यवनी कटुतिक्तोष्णा वातश्लेष्मद्विजामयान्।
हन्ति गूल्मारुची शूलं दीपयत्याशु चानलम् ॥

वोंवा।

जीरकं कटुकं रुच्यं दीपनं पाचनं लघु।
सुगन्धि मेध्यं श्लेष्मघ्नमुष्णं छर्द्यतिसारजित् ॥
गुल्मशूलोदराध्मानक्रिमिदन्तामयापहम्।

जीरें।

हिङ्गु वातकफानाहशूलघ्नं पित्तकोपनम्।
कटुपाकं सरं रूक्षं प्लीहानाहान्त्रवृद्धिजित् ॥

हिङ्गु।

शताह्वा कटुका स्निग्धा तिक्ता श्लेष्मातिसारनुत्।
ज्वरनेत्रव्रणघ्नी च वस्तिकर्मणि शस्यते ॥

थोरसेउषा।

शुण्ठिः कटूष्णा तिक्ता च कफशोफानिलापहा ।
शूलबन्धोदरानाहश्वासश्लीपदहारिणी ॥

शुण्ठी ।

मरीचं कटुतिक्तोष्णं लघु श्लेष्माग्निनाशनम् ।
समीरक्रिमिहृद्रोगहरं च रुचिकारकम् ॥

मरीच ।

मरीचं क्षुपजं रुच्यं दोषलं सर्वरोगकृत् ।
विशेषतः प्रमेहार्शोविकारेषु न शस्यते ॥

बृहन्मरीचं क्षुपजं ततोऽप्यल्पान्तरं गुणैः ।

मिरसेङ्गा ।

श्लेष्मला स्वादुशीतार्द्रा गुर्वी स्निग्धा च पिप्पली ।
सा शुष्का विपरीतातः स्निग्धा वृष्या रसे कटुः ॥
स्वादुपाकानिलश्लेष्मकासश्वासापहा परा ॥

पिंपली ।

सैन्धवं लवणं वृष्यं चक्षुष्यं वह्निदीपनम् ।
त्रिदोषशमनं पूतं व्रणदोषविकारनुत् ॥

सैन्धवं द्विविधं प्रोक्तं सितरक्तविभेदतः ।
रसवीर्यविपाकेषु गुणाढ्यं तु सितं शिवम् ॥

सैन्धव ।

गाढादिलवणं शुभ्रं पृथ्वीजं गढदेशजम् ॥
गढोत्थं च महारम्भं साभरं साभरोद्भवम् ।

गाढोत्थं लवणं तूष्णमीषदम्लं मलापहम् ।
दीपनं कफवातघ्नमर्शोघ्नं कोष्ठशोधनम् ॥
साभरं संभरदेशे प्रसिद्धम् ।

गाढलवणं ।

सामुद्रं लघु हृद्यं च पलितास्रागुपित्तदम् ।
विदाहि कफवातघ्नं दीपनं रुचिकृत् परम् ॥

सामुद्रलवणम् ।

द्रोणेयं लवणं पाके नात्युष्णमविदाहि च ।
भेदनं स्निग्धमीषच्च शूलघ्नं चाम्लपित्तलम् ॥

डोणीचें लवण ।

औखरं च कटु क्षारं तिक्तं वातकफापहम् ।
विदाहि पित्तकृद्ग्राहि मूत्रसंशोषकारि च ॥

आटुकलवण ।

रोमकं तीक्ष्णमत्युष्णं कटु तिक्तं च दीपनम् ।
दाहशोषकरं ग्राहि पित्तकोपकरं परम् ॥

वाफे सुकलें लवण ।

इति लवणानि ।

त्वचं[1] तु कटुकं शीतकफकासविनाशनम् ।
शूलामशमनं चैव कण्ठशुद्धिकरं लघु ॥

तज ।

पत्रकं लघु शीतोष्णं कफवातविषापहम् ।
बस्तिवातामयघ्नं च कण्ठशीर्षरुजापहम् ॥

पत्रज ।

नागकेसरमल्पोष्णं लघु तिक्तं कफापहम् ।
बस्तिवातामयघ्नं च कण्ठशीर्षरुजापहम् ॥

नागकेसर ।

अलक्तो रक्ततीक्ष्णोष्णः कफवातामयापहः ।
कण्ठरुक्शमनो रुच्यो व्रणदोषार्तिनाशनः ॥

अलिता ।

कुङ्कुमं सुरभि तिक्तकटूष्णं कासवातकफकण्ठरुजाघ्नम् ।
मूर्धशूलविषदोषविमोचं रोचनं च तनुकान्तिकरं च ॥

कुङ्कुमकेसर ।

---

१. $P_1$ त्वचं. $P_2$; वचं.

२. $P_1$; $P_2$: 1. तक्ष्णोष्णं T

कस्तूरी सुरभिस्तिक्ता चक्षुष्या मुखरोगनुत् ।
किलासकफदौर्गन्ध्यगन्धालक्ष्मीमलापहा ॥
दौर्गन्ध्यगन्ध इत्येकं पदम् ।

कस्तूरी ।

अत्रैव प्रसङ्गात् तद्भेदास्तल्लक्षणं कृत्रिमस्वरूपं चोच्यते ॥

कपिला पिङ्गला कृष्णा कस्तूरी त्रिविधा क्रमात् ।
नेपालेऽपि च काश्मीरे कामरूपेऽपि जायते ॥

साप्येका खरिका ततश्च तिलका ज्ञेया कुलत्थापरा
पिण्डान्यापि च नाधिकेति च परा या पञ्चभेदाभिधा ।
सा शुद्धा मृगनाभितः क्रमवशादेषातितीक्ष्णोत्थिता
पक्षत्यादिदिनत्रयेषु जनिता कस्तूरिका श्रूयते ॥

धूम्राकृतिस्तु खरिका तिलका तिलाभा
कौलत्थबीजसदृशी च कुलत्थकाख्या ।
स्थूला ततः कियदियं किल पिण्डका स्यात्
तस्याश्च किञ्चिदधिका यदि नाधिका सा ॥

तिक्ता स्वादे पिञ्जरा केतकीनां
गन्धं धत्ते लाघवं तोलने च ।
याप्सु न्यस्ता नैव वैवर्ण्यमीयात्
कस्तूरी सा राजभोग्या प्रशस्ता ॥

किञ्च,

या गन्धं केतकीनामपहरति मदं सिन्धुराणां च वर्णे
स्वादे तिक्ता कटुर्वा लघुरथ क्षुदिता मर्दिता चिक्कणा स्यात् ।
दाहं या नैति वह्नौ चिमिचिमिति चिरं चर्मगन्धा हुतान्ते
सा कस्तूरी प्रशस्ता वरमृगतनुजा राजते राजभोग्या ॥

अपि च,

बाले जरति च हरिणे क्षीणे रोहिणि हि मन्दगन्धयुता ।
कामरते वा तरुणे कस्तूरी बहुपरिमला भवति ॥

1. T 2. रुग्णे हि ।

तथा,

कस्तूरी धूपगन्धा वहति विनिहिता पीचतां पाथसोऽन्त-
र्निःशेषं या निविष्टा भवति हुतवहे भस्मसादेव सद्यः ।
या च न्यस्ता तुलायां कलयति गुरुतां मर्दिता रूक्षतां च
ज्ञेया कस्तूरिकेयं खलु कृतमतिभिः कृत्रिमा नैव सेव्या ॥

इति कस्तूरीप्रकरणम् ।

गोरोचनातिशिशिरा विषदोषहन्त्री
रुच्या च पाचनकरी क्रिमिकुष्ठहन्त्री ।
भूतग्रहोपशमनी कुरुते च वश्यं
सर्वत्र मङ्गलकरी जनमोहिनी च ॥

गोरोचना ।

---

अथ कर्पूरः ।

पोतास्यो भीमसेनस्तदनु शितकरः शङ्करावाससंज्ञः
पांशुः[1] पिण्डाब्जसारस्तदनु हिमयुतो[2] वालुका जूटिका च ।
पश्चादास्या तुषारस्तदुपरि सहिमश्शीतलः पाक्विकान्या
कर्पूरश्चेति भेदा गुणरसमहसां चैव ह्रस्वेन[3] दृश्याः ॥

इति कर्पूरभेदाः ।

कर्पूरश्शिशिरस्तिक्तः कटुः श्लेष्मास्रपित्तनुत् ।
तृष्णाविदाहकण्ठास्यदोषघ्नोऽक्षिरुजापहः ॥

किञ्च,

कर्पूरो नूतनस्तिक्तः स्निग्धश्चोष्णश्च दाहदः ।
चिरस्थो दाहशोषघ्नः सुधौतश्शुभकृत्परः ॥
शिरोमध्ये तलं चेति कर्पूरस्त्रिविधो मतः ।
शिरः स्तम्भाग्रसञ्जातं मध्यं पर्णे तले तलम् ।
शिरोमध्यतलानां च क्रमेण गुणगौरवम् ॥

---

१. P 1.; P 2. पांसुः ।
२. T 2. हित ।
३. T 2, P 2. ह्रस्येन ।

तथा

स्तम्भमध्यस्थितश्श्रेष्ठः स्तम्भबाह्ये च मध्यमः ।
श्रेष्ठमीषद्धरिद्राभं शुभ्रं तन्मध्यमं स्मृतम् ॥

सुदृढं शुभ्ररूक्षं तु पुलकं बाह्यजं स्मृतम् ।

अपि च

स्वच्छं भृङ्गाभ्रपत्रद्युति लघु विशदं तोलने तिक्तकं चेत्
स्वादे शैत्यं सुहृद्यं बहलपरिमलामोदि सौरभ्यदायि ।
निस्स्नेहं दीर्घपत्रं शुभतरमति वैद्यराजयोग्यं प्रशस्तं
कर्पूरं चान्यथा चेद् बहुतरमशने स्फोटदोषप्रदायि ॥

चीनकः कटुतिक्तोष्ण ईषच्छेतः कफापहः ।
कण्ठदोषहरो मेध्यः पाचनः कृमिनाशनः ॥

चीनकर्पूरः ; कृत्रिमः ।

जातीपत्री कटुस्तिक्ता सुरभिः कफनाशिनी ।
वक्त्रवैशद्यजननी जाड्यदोषनिकृन्तनी ॥

जायपत्री ।

जातीफलं कषायोष्णं कटु कण्ठामयार्तिजित् ।
रक्तातिसारमेहघ्नं वृष्यं दीपनकं लघु ॥

जायफल ।

कङ्कोलं कटु तिक्तोष्णं वक्त्रजाड्यहरं परम् ।
दीपनं पाचनं रुच्यं कफवातनिकृन्तनम् ॥

कापुरचिणी ।

लवङ्गं शीतलं तिक्तं चक्षुष्यं भक्तरोचनम् ।
वातपित्तकफघ्नं च तीक्ष्णं मूर्धरुजापहम् ॥

लवङ्ग ।

सौगन्धिकं जवादि स्यात् स्निग्धं चोष्णं सुखावहम् ।
धाते हितं तु राज्ञां च मेहनाह्लादकारकम् ॥

जवादि ।

तल्लक्षणं च

जवादि नीरसं स्निग्धमीषत्पिङ्गं सुगन्धिदम् ।
आतपे बहुलामोदं राज्ञां योग्यं च नान्यथा ॥

इति ॥

इति सम्भाराः ॥

---

अथ हृतयः ।

शिग्रुमूलस्य चूर्णेन मर्दितं पानसं फलम् ।
हृतं स्यात्कादलं पक्कं फलमौदुम्बरत्वचा ॥

वंशत्वचा वापि भवेदपि शालितृणेन वा ।
तालमूलस्य चूर्णेन तत्फलं भवति हृतम् ॥

इति हृतयः ॥

---

अथ घृतप्रकरणम् ।

शोणस्य नारिकेलस्य बालस्यान्तर्गतं जलम् ।
सकल्कं क्षोदितं मेघनादमूलरजोन्वितम् ॥

समेन सर्पिषा युक्तं यदि पक्कं घृतं भवेत् ।
चूर्णं बकुलबीजस्य क्षिप्त्वा तैले पयस्समे ।

पक्के तैलावशेषे तु तद्घृतं भवति ध्रुवम् ॥

लशुनं षोडशांशं तु पुन्नागफलसंयुतम् ।
शर्करां च पचेद्यस्तु तैलप्रस्थं घृतं भवेत् ॥

मुद्गभिन्नस्य खण्डेन सार्धांशेन युतं घृतम् ।
साष्टरम्भाफलं सर्पिः प्रस्थं प्रस्थद्वयं भवेत् ।
मृते तु माहिषे क्षीरे चतुर्भागावशेषिते ।
तुल्याज्ये कर्णिकारस्य पुष्पैः पक्कं घृतं भवेत् ।
तुल्याज्यतैलं बकुलबीजं पक्कं घृतं भवेत् ॥

इति कृत्रिमघृतानि ॥

---

१ T 2. शालितुषेण.

२ P1 तज्जलं P2 तडलं ।

अथ शर्करा ॥

क्षीरं पुनर्नवाया मूलेनावर्तितं पक्वम् ।
भवति सितेव सिता सा क्षीरगुणैवेति पाकज्ञाः ॥

चक्रिकामूलेनापि भवति । कोमलानि शिवजटाग्राणि रविकरस्पृष्टानि चूर्णयेत् । तच्चूर्णं क्षीरे क्षिप्तं तथा भवति ।

इति शर्करा ॥

---

अथ पानकानि ।

जलेन शीतलेनैव घोलिता श्वेतशर्करा ।
एलालवङ्गकर्पूरमरीचैश्च समन्विता ॥
शर्करोदकमाख्यातं शुक्लं शिशिरं सरम् ।
बल्यं रुच्यं लघु स्वादु वातपित्तास्रनाशनम् ॥
मूर्च्छाच्छर्दितृषादाहज्वरशान्तिकरं परम् ।

शर्करोदकम् ।

आममाम्रं जलक्लिन्नं मर्दितं दृढपाणिना ।
सिताशीताम्बुसंयुक्तं कर्पूरमरिचान्वितम् ॥
प्रपानकमिदं श्रेष्ठं भीमसेनेन निर्मितम् ।
सद्यो रुचिकरं बल्यं शीघ्रमिन्द्रियतर्पणम् ॥

प्रपानकम्

अम्लिकाया फलं पक्वं मर्दितं वारिणा दृढम् ।
शर्करामरिचोन्मिश्रं लवङ्गेन्दुसुवासितम् ॥
अम्लिकाफलसम्भूतपानकं वातनाशनम् ।
पित्तश्लेष्मकरं किञ्चित् सुरुच्यं वह्निबोधकम्[1] ।

अम्लिकाफलपानकम् ।

भागैकं निम्बुजं तोयं षड्भागं शर्करोदकम् ।
लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम् ॥
निम्बूफलभवं पानमत्यल्पं वातनाशनम् ।

---

१. P1. वह्निवर्धनम्

वह्निदीप्तिकरं रुच्यं समस्ताहारपाचनम् ॥

निंबूफलपानकम्।

शिलायां साधु सम्पिष्टं धान्यकं वस्त्रगालितम्।
शर्करोदकसंयुक्तं कर्पूरादिसुसंस्कृतम् ॥

नवीने मृन्मये पात्रे स्थितं पित्तहरं परम् ॥

धान्यपानकम्।

तुर्यांशेन जलेन संयुतमतिस्थूलं सदम्लं दधि
प्रायो माहिषमंशुकेन विमले मृद्भाजने चालयेत्।
भृष्टं हिङ्गु च जीरकं च लवणं राजीं च किञ्चिन्मितां
पिष्ट्वा तत्र विमिश्रयेद्भवति तत्तक्रं न कस्य प्रियम् १॥

तक्रं रुचिकरं वह्निदीपनं पाचनं परम्।
उदरे ये गदास्तेषां नाशनं तृप्तिकारकम् ॥

तक्रपानकम्।

विदाहीन्यन्नपानानि यानि भुङ्क्ते हि मानवः।
तद्विदाहप्रशान्त्यर्थं भोजनान्ते पयः पिबेत् ॥

पयःपानम्।

अथ काञ्जिकम्।

संहितं धान्यमण्डादि काञ्जिकं कथ्यते जनैः।
काञ्जिकं भेदि तीक्ष्णोष्णं पित्तकृत्स्पर्शशीतलम् ॥

श्रमक्लमहरं रुच्यं दीपनं वस्तिशोधनम्।

तथा —

काञ्जिकं भेदि तीक्ष्णोणं रोचनं पाचनं लघु ॥

दाहज्वरहरं स्पर्शाद् पानाद्वातकफापहम्।
माषादिवटकैर्यत्तु क्रियते तद् गुणाधिकम् ॥

---

१. P1. श्रम.

लघु वातहरं तत्तु रोचनं पाचनं परम् ।
शूलाजीर्णविबन्धाध्मनाशनं वस्तिशोधनम् ॥

काञ्ची ।

न भवेत्काञ्जिकं यत्र तत्र शालिः प्रदीयते ।

सा च —

आममाम्रफलं पिष्टं राजिकालवणान्वितम् ।
भृष्टं हिङ्गुयुतं पूतं घोलितं शालिरुच्यते ॥

शालिर्हरति जिह्वायाः कुण्ठत्वं कण्ठशोधिनी ।
मन्दं मन्दं निपीता सा रोचिनी वह्निबोधिनी ॥

शाली ।

तुषोदकं यवैरामैः सतुषैश्शकलीकृतैः ।
उदकैस्संहितैरम्लैस्सम्पक्वं स्यात्तुषोदकम् ॥

तुषाम्बु दीपनं हृद्यं पाण्डुक्रिमिगदापहम् ।
तीक्ष्णोष्णं पाचनं पित्तरक्तकृद्वस्तिशूलनुत् ॥

तुषोदकम् ।

सौवीरं तु यवैरामैः पक्वैर्वा निस्तुषैः कृतम् ।
गोधूमैरपि सौवीरमाचार्याः केचिदूचिरे ॥

सौवीरं तु ग्रहण्यर्शःकफघ्नं भेदि दीपनम् ।
उदावर्ताङ्गमर्दास्थिशूलानाहेषु शस्यते ॥

सौवीरम् ।

आरनालं तु गोधूमैरामैस्स्यान्निस्तुषीकृतैः ।
पक्वैर्वा संहितैस्तत्तु सौवीरसदृशं गुणैः ॥

आरनालम् ।

---

१. P1. P2. छर्दि.
२. T1. gives a varient reading also :— बन्धानां नाशनम् ।
३. P1. P2. सालि.

धान्याम्लं शालिचूर्णाद्य कोद्रवादिकृतं भवेत् ।
धान्याम्लं धान्ययोनित्वात्प्रीणनं लघु दीपनम् ।
अरुचौ वातरोगेषु सर्वेष्वास्थापने हितम् ॥

धान्याम्लम् ।

शण्डाकी राजिकाशुक्तैस्स्यान्मूलकदळद्रवैः ।
सर्षपस्वरसैर्वापि शालिपिष्टकसंयुतैः ॥

संहितैरिति शेषः ।

शण्डाकी रोचनी गुर्वी पित्तश्लेष्मकरी स्मृता ॥

शण्डाकी ।

कन्दमूलफलादीनि सस्नेहलवणानि च ।
यत्र द्रवेऽभिषूयन्ते तत्सूक्तमभिधीयते ॥

सूक्ष्मं कफघ्नं तीक्ष्णोष्णं रोचनं पाचनं लघु ।
पाण्डुक्रिमिहरं रूक्षं भेदनं रक्तपित्तकृत् ॥

आस्रुतम् ।

इति काञ्जीप्रकरणम् ।

---

अथ क्षीरप्रकरणम् ।

तत्र क्षीरसामान्यगुणाः —

सद्यःशुक्रकरं शीतं सात्म्यं सर्वशरीरिणाम् ।
जीवनं बृंहणं बल्यं मेध्यं वाजीकरं परम् ॥

वयःस्थापकमायुष्यं सन्धिकारि रसायनम् ।
विरेकवान्तिवस्तीनां तुल्यमोजोविवर्धनम् ॥

जीर्णज्वरे मनोरोगे शोफमूर्च्छाभ्रमेषु च ।
ग्रहण्यां पाण्डुरोगे च दाहे तृषि हृदामये ॥

शूलोदावर्तगुल्मेषु वस्तिरोगे गुदाङ्कुरे ।
रक्तपित्तेऽतिसारे च योनिरोगे श्रमे क्लमे ॥

---

1. P2. श्रमेषु.

गर्भस्रावे च सततं हितं मुनिवरैस्स्मृतम् ।
बालवृद्धक्षतक्षीणाः क्षुद्व्यवायकृशाश्च ये ॥
तेभ्यस्तदातिशयितं हितमेतदुदाहृतम् ॥
इति पयस्सामान्यगुणाः ॥

अथ पयोविशेषगुणाः ।

तत्र गोक्षीरस्य यथा —

गव्यं क्षीरं पथ्यमत्यन्तरुच्यं स्वादु स्निग्धं पित्तवातामयघ्नम् ।
कान्तिं प्रज्ञां बुद्धिमेधाङ्गपुष्टिं धत्ते स्पष्टं वीर्यवृद्धिं विधत्ते ॥

तथा —

स्वादु पाकरसं स्निग्धमोजस्यं धातुवर्धनम् ।
वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ॥

स्वादु पाकरसमित्यादि पयस्सामान्यानुवादः ।

प्रायः पयोऽत्र गव्यं तु जीवनीयं रसायनम् ।
क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सदा ॥
श्रमभ्रममदालक्ष्मीकासश्वासादितृट्क्षुधः ।
जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् ॥
इति वर्णसामान्येन गव्यगुणाः ॥

अथ वर्णविशेषेण ।

गवां सितानां वातघ्नं कृष्णानां पित्तनाशनम् ।
कफघ्नं रक्तवर्णानां कपिलानां त्रिदोषनुत् ॥
गवां विविधवर्णानां वातपित्तहरं गुरु ।
पयः कर्पूरवर्णानां प्रायः पीनसकारणम् ॥
इति वर्णविशेषेण गुणाः ।

---

१. P1. P2. कृत .
२. T2. omits 'वात......कर्पूरवर्णानाम्'.
३. T1. P1. P2. कर्बुरवर्णानाम् ।

अथ वयोविशेषेण ।

गृष्टिक्षीरं तु वातघ्नं मध्यमायास्तु पित्तहृत् ।
वृद्धायाः कफहृद् वृद्धवत्सायाश्च रसायनम् ॥

प्रसूतिदोषाद्यत्क्षीरं पाके विग्रथितं भवेत् ।
तत्पीयूषमिति ख्यातं सर्वदोषकरं गुरु ॥

विभेदि मूत्रलं वृष्यं मधुरं वह्निमान्द्यकृत् ।

खरोस ।

पयः प्रसूतेस्सप्ताहादूर्ध्वमर्वाक् च मासतः ।
तत्प्रमोरटकं विद्याद् दुष्टं गुरुतरं स्मृतम् ॥

प्रमोरटः ।

नष्टदुग्धभवं नीरं मोरटं जैर्जटोऽब्रवीत् ।

मोरटः ।

नष्टदुग्धस्य पक्वस्य पिण्डः प्रोक्तः किलाटकः ।

किलाटः ।

अपक्वमेव यन्नष्टं क्षीरशाकं हि तत्पयः ।

क्षीरशाकम् ।

दध्ना तक्रेण वा नष्टं दुग्धं बद्धं सुवाससा ।
द्रवभागेन हीनं यत् तक्रपिण्डस्स उच्यते ॥

तक्रपिण्डः ।

इममेवामिक्षेति याज्ञिकाः । एतन्नीरं वाजिनमिति ॥

पीयूषं च किलाटश्च क्षीरशाकं तथैव च ।
तक्रपिण्ड इमे वृष्या बृंहणा बलवर्धनाः ॥

गुरवश्श्लेष्मला हृद्या वातपित्तविनाशनाः ।
दीप्ताग्नीनां विनिद्राणां[1] व्यवाये चातिपूजिताः ॥

इति पीयूषादिगुणः ।

---

१. T2. adds विनिद्राणां विगतनिद्राणाम् ।

पयोऽभिष्यन्दि गुर्वामं युक्त्या शृतमतोऽन्यथा ।
भवेद्गुरीयोऽतिशृतं धारोष्णममृतं पयः ॥

युक्त्या शृतमिति ।

चतुर्थभागं सलिलं निधाय यत्नाद्यदावर्तितमुत्तमं तद् ।
सर्वामयघ्नं बलपुष्टिकारि वीर्यप्रदं क्षीरमतिप्रशस्तम् ॥

अन्ये तु —

क्षीरे समांशं पानीयं प्रक्षिप्य विपचेद् बुधः ।
क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः ॥

इत्यामादिगुणाः ।

वृष्यं बृंहणमग्निवर्धनकरं पूर्वाह्णपीतं पयो
मध्याह्ने बलदायकं रतिकरं कृच्छ्रस्य विच्छेदकम् ।
बाल्ये वह्निकरं ततो बलकरं वीर्यप्रदं वार्धके
रात्रौ क्षीरमनेकदोषशमनं सेव्यं ततस्सर्वदा ॥

तथा —

गव्यं पूर्वाह्णकाले स्यादपराह्णे तु माहिषम् ।
क्षीरं सशर्करं पथ्यं यावत्सात्म्यं तु सर्वदा ॥

इति कालविशेषेण पयःपाने गुणाः ।

क्षीरं मुहूर्तत्रितयोषितं यदतस्तमेनाद्विकृतिं प्रयाति ।
वर्ष्मादिदोषं कुरुते तदूर्ध्वं विषोपमं स्यादुषितं जनानाम् ॥

इत्युषितपयःपाने दोषः ।

जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् ।
तदेव तरुणे पीतं विषवद्धन्ति मानवम् ॥

पित्तघ्नं शृतशीतलं कफकरं पक्वं तदुष्णं भवे-
च्छीतं तत्तु न पाचितं तदखिलं विष्टम्भदोषप्रदम् ।

कफकरं, क्षीणस्य कफस्य यथावस्थितकरं न तु चयादिकारकम्। 'शृतशीतं त्रिदोषघ्नमि'ति वचनात्। 'कफे क्षीणे अमृतोपममि'त्युक्तत्वाच्च। एवं च त्रिदोषघ्नमिति वातादिविकारहारित्वं सिद्धं भवति। पक्वमिति । तद् दुग्धं पक्वं ततश्शीतं तदेव पुनरुष्णं तदपि पित्तघ्नमित्यर्थः ॥

धारोष्णं त्वमृतं पयः श्रमहरं निद्राकरं कान्तिदं
वृष्यं बृंहणमग्निवर्धनमतिस्वादु त्रिदोषापहम् ॥

क्षीरं न भुञ्जीत कदाप्यतस्तं भुञ्जीत चेन्नो लवणेन सार्धम्।
पिष्टेन सन्धानकषायमुद्गकोशातकीकन्दफलादिकैश्च ॥

क्षीरं गवाजकादेर्मधुरं क्षीरं नवप्रसूतानाम्।
रूक्षं च पित्तदाहं करोति रक्तामयं कुरुते ॥

मधुरं त्रिदोषशमनं क्षीरं मध्यप्रसूतानाम्।
लवणं मधुरं क्षीरं विदाहजननं चिरप्रसूतानाम् ॥

गुणहीनं निःसारं क्षीरं प्रथमप्रसूतानाम्।
मध्यवयसां रसायनमुक्तमिदं दुर्बलं तु वृद्धानाम् ॥

तासां मासत्रयादूर्ध्वं गुर्विणीनां तु यत् पयः।
तदा हि लवणं क्षीरं मधुरं पित्तदोषकृत् ॥

क्षीरं कासश्वासकोपाय सर्वं गुर्वापि स्यात् प्रायशो दोषदायि।
तच्चेत् क्वाथ्यावर्तितं पथ्यमुक्तं नारीक्षीरं त्वाममेवामयघ्नम् ॥

केऽप्याविकं पथ्यतमं शृतोष्णं क्षीरं त्वजानां शृतशीतमाहुः।
दोहानुशीतं महिषीपयश्च गव्यं तु धारोष्णमिदं प्रशस्तम् ॥

ताम्रे वातहरं पात्रे सौवर्णे पित्तनाशनम्।
रौप्ये श्लेष्मपरीहारं कांस्ये रक्तप्रसादनम् ॥

आयसे तु शृतं क्षीरं क्रिमिपित्तकफप्रणुत्।
कान्तसारमये श्रेष्ठं त्रिदोषघ्नं रसायनम् ॥

प्रमेहकुष्ठपिटकाक्रिमिगुल्मान्त्रशूलनुत् ।
मृत्पात्रे तु शृतं क्षीरं पूर्वोक्तैरन्वितं गुणैः ॥

स्याभिर्जलं शृतं यद्वद्वित्रिषडष्टांशशेषितम् ।
यथा शृतसमं सारं गुरु बल्यतमं पयः ॥

अर्धावशिष्टं पानं स्यात् त्रिभागं लेह्यकं भवेत् ।
षड्भागं पिष्टतामेति शर्करा स्यादथाष्टमे ॥

तदेवातिशृतं सर्वं गुरु बृंहणमुच्यते ।
दीपनी तर्पणी वृष्या गुर्विणी प्राणलम्बिनी ॥

स्वादुपाकरसा स्निग्धा रुच्या सन्तानिका मता ।

साय ।

द्रव्यान्तराविरोधित्वात् सरत्वाच्चानुपानतः ।
क्षीरं भक्तोत्तरं पथ्यं दीपनं मलशोधनम् ॥

रक्तपित्तानिलच्छर्दिमूर्च्छाहिक्कापहारि च ।
खण्डेन सहितं दुग्धं कफकृत् पवनापहम् ॥

सितासितोपलायुक्तं शुक्रलं त्रिमलापहम् ।
सगुडं मूत्रकृच्छ्रघ्नं पित्तश्लेष्मकरं स्मृतम् ॥

यथा—

क्षीरं साक्षाज्जीवनं जन्मदं स्यात्
तद्वारोष्णं गव्यमायुष्यमुष्णम् ।
प्रातस्सायं ग्राम्यधर्मावसाने
भुक्तेः पश्चादात्मसात्म्यं करोति ॥

तथा—

पयोऽभिष्यन्दि गुर्वामं प्रायशः परिकीर्तितम् ।

---

१. P2· शृततमं ।
२. P2· शुक्रम् ।

तदेव चामृतं विद्याद् गुरु तर्पणबृंहणम् ॥

वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम् ।
धारोष्णममृतं क्षीरं विपरीतमथोच्यते ॥

अनिष्टगन्धमम्लं च विवर्णं विरसं च यत् ।
वर्ज्यं सलवणं क्षीरं यच्च विग्राथितं भवेत् ॥

रात्रौ क्षीरं न भुञ्जीयाद् यदि भुञ्जीत न स्वपेत् ।
यदि स्वपेत् क्षयेदायुस्तस्मात् क्षीरं दिवा स्मृतम् ॥

धारोष्णममृतं पथ्यं धाराशीतं त्रिदोषजित् ।
भृतशीतं त्रिदोषघ्नं शीतोष्णं कफवातजित् ॥

अप्याविकं पथ्यतमं भृतोष्णमाजं पयो वै भृतशीतमेव ।
धारासुशीतं महिषीपयश्च धारोष्णमेवं हितमेव गव्यम् ॥

पित्तघ्नं माहिषं क्षीरं वातघ्नं चाविकं पयः ।
वातपित्तहरं गव्यं त्रिदोषघ्नमजापयः ॥

प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम् ।
रात्रौ सौम्यगुणत्वाच्च व्यायामाभावतस्तथा ॥

दिवाकराभितप्तानां व्यायामानिलसेवनात् ।
वातपित्तहरं चैव चक्षुष्यं चापराह्णिकम् ॥

मुहूर्ते पचनादूर्ध्वं क्षीरं भजति विक्रियाम्[1] ।
तदेव द्विगुणे काले विषवद्धन्ति मानवम्[2] ॥

येषां न साम्यं क्षीरेण पीतं चाध्मानकारकम् ।
तेषामर्धजले दत्त्वा [3]नागरं पिप्पलीयुतम् ॥

आवर्तयेत् क्षीरशेषं तत् पीत्वा सुखमेधते ।
स्निग्धत्वाद् गौरवाज्जाड्यात् त्रिकालं न पिबेत् पयः ॥

---

१. $T_2$. adds पचनात्पाकादूर्ध्वं मुहूर्तं स्थितं ।
२. $T_2$. adds द्विगुणे मुहूर्तद्वयम् ।
३. $P_1$. नांगारं $P_2$. नारंगम् ।

समाग्निरपि किञ्चान्यो मन्दाग्निर्विषमोऽपि वा ।
तीक्ष्णाग्निना तु पातव्यं द्विकालमपि माहिषम् ॥

तस्य धातून् पचेदग्निर्यदा तेन न सिञ्चति ।

इति गव्यस्य सामान्यतस्तदितरस्य च गुणाः । अथेतरस्य विशेषगुणाः ।

तत्र माहिषस्य—

माहिषं बलवर्णौजोनिद्राशुक्लबलप्रदम् ।
तीक्ष्णाग्निशमनं स्वादु रसपाके च पुष्टिदम् ॥

व्यायामश्रान्तदेहस्य श्रमघ्नमनिलापहम् ।
निष्कामस्यापि वृद्धस्य स्त्रीषु कामप्रदायकम् ॥

[1]बलिनस्तरुणस्यापि विशेषात् कामदायकम् ॥

इति माहिषक्षीरगुणाः ।

अथाजस्य—

अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् ।
नात्यम्बुपानाद्व्यायामात् सर्वव्याधिहरं पयः ॥

तथा —

आजमग्निबलकृत् क्षयकासश्वासहृत् कफहरं परमं तत् ।
रक्तपित्तहरमाश्वतिसारे रक्तजे च कथितं हितमेतत् ॥

तथा—

गोदुग्धतः स्यादधिकं गुणेषु सु[2]तीक्ष्णदेहेषु च पथ्यमुक्तम् ।
[3]स्थूलाजदुग्धं कथितं पयोज्ञैः सूक्ष्माजदुग्धं त्विह कि[4]ञ्चिदूनम् ॥

इत्याजस्य ॥

---

१. T2. omits बलिन— — —यकम् ।
२. P1. P2. सुक्षीण ।
३. P1, P2. स्थूलाजदुग्धं ।
४. P1. किञ्चिदुष्णम् ।

अथौष्ट्रस्य—

उष्ट्रीक्षीरं क्षुत्तिशोफापहारि पित्तश्लेष्मात्यर्शसां च प्रशस्तम् ।
आनाहघ्नं चोदराणां प्रशस्तं जन्तुघ्नं वै शस्यते सर्वकालम् ॥

इत्यौष्ट्रस्य ॥

अथैकशफस्य—

उष्णमैकशफं बल्यं श्वासवातापहं पयः ।
मधुराम्लरसं रूक्षं लवणानुरसं लघु ॥

इति खराश्वीक्षीरयोः ॥

अथ मानुष्याः—

मानुष्या मधुरं स्तन्यं कषायानुरसं हिमम् ।
नस्याश्च्योतनपथ्यं च जीवनं लघु दीपनम् ॥

इति मानुष्याः ॥

अथ हस्तिन्याः—

हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु ।
स्निग्धं धैर्यकरं शीतं चक्षुष्यं बलवर्धनम् ॥

इति हस्तिन्याः ॥

अथैडक्याः —

आविकं तु पयः स्निग्धं कफपित्तकरं गुरु ।
पथ्यं वातप्रकोपेषु कासे चानिलसम्भवे ॥

इत्यैडक्याः ॥

अथ मेष्याः—

मेषीक्षीरं समधुरं गाढं स्निग्धं कफापहम् ।
वातामयकरं स्थौल्यं लोमघ्नं गुरु वर्धनम् ॥

इति मेष्याः ॥

अथादिमेदानाह राजनिघण्टौ—

[1]अजो बुकस्तु मेध्यः स्यात् लम्बकर्णः पशुश्च सः ।
अजा पयस्विनी भीरुः छागी मेध्या गळेस्तनी ॥

---

१. $P_1$, $P_2$, read "अजो... ... विः स्यात् ॥" after "इत्यैडक्याः" and $T_1$. omits this portion.

मेषो मेढो हुडो मेण्ढू ऊर्णायुरुरणस्तथा ।
एडकः शृङ्गिणोऽपि स्यात् ॥ इति ॥

अथ मथितक्षीरगुणाः

क्षीरं गव्यमथाजं वा कोष्णं दण्डाहतं भवेत् ।
लघु वृष्यं ज्वरहरं वातपित्तकफापहम् ॥

अथ क्षीरफेनगुणाः—

गोदुग्धप्रभवं किं वा छागीदुग्धसमुद्भवम् ।
भवेत्फेनं त्रिदोषघ्नं रोचनं बलवर्धनम् ॥
वह्निवृद्धिकरं पथ्यं सद्यस्तृप्तिकरं लघु ॥
अतिसारेऽग्निमान्द्ये च ज्वरे जीर्णे प्रशस्यते ।
विवर्णं विरसं चाम्लं दुर्गन्धं ग्रथितं पयः ।
वर्जयेदम्ललवणयुक्तं कुष्ठादिकृद्यतः ॥

अथ क्षीरमित्राणि—

सहकारफलं चैव गोस्तनी माक्षिकं घृतम् ॥
नवनीतं शृङ्गवेरं पिप्पली मरिचानि च ॥
सिता पृथुकसिन्धूत्थपटोला नागराभया ।
क्षीरेण सह शस्यन्ते वर्गेषु मधुरादिषु ॥

तथा—

अम्लेष्वामलकं पथ्यं शर्करा मधुरेषु च ।
पटोलः शाकवर्गेषु कटुकेष्वार्द्रकं भवेत् ।
कषायेषु यवाश्चैव लवणेषु च सैन्धवम् ॥

अम्लेष्वामलकमित्यनुभवविरोधात् उपेक्ष्यम् आमलकान्तराभिप्रायं वा ।

इति क्षीरमित्राणि ॥

अथामित्राणि —

मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः ।
शाकजाम्बवसुरादिसेवितं मारयत्यबुधमाशु सर्पवत् ॥

तथा —

नैकध्यं पयसाश्नीयात् सर्वं चोष्णं द्रवाद्रवम् ॥
मूलकाद्या हरितकाः तैलपिण्याकसर्षपाः ॥

कापित्थजम्बुजम्बीरं पनसं मातुलुङ्गकम् ।
वांशं करीरं बदरं कदली चाम्लदाडिमम् ॥

फलमीदृग्विधं चान्यत् तद्वद्धि तत्फलान्यपि ॥
क्षीरे विरुद्धान्यैकध्यं सह वै भुज्यते यदि ।

बाधिर्यमान्ध्यं वैवर्ण्यं मूकत्वं वाथ मारणम् ॥

इति क्षीरामित्राणि ॥

इति दुग्धप्रकरणम् ॥

अथ दधि । तच्चावस्थाभेदेन पञ्चविधम् ।

आदौ मन्दं ततः स्वादु स्वाद्वम्लं च ततः परम् ।
अम्लं चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा ॥

अथ क्रमेण तल्लक्षणानि तद्गुणाश्च —

मन्दं दुग्धवदव्यक्तरसं किञ्चिद्घनं भवेत् ।
मन्दं स्यात् सृष्टविण्मूत्रं दोषत्रयविदाहकृत् ॥

यत् सम्यग् घनतां याति व्यक्तस्वादुरसं भवेत् ।
अव्यक्ताम्लरसं तत्तु स्वादु विज्ञैरुदाहृतम् ॥

स्वादु स्यादत्यभिष्यन्दि वृष्यं मेदःकफापहम् ।
वातघ्नं मधुरं पाके रक्तपित्तप्रसादनम् ॥

स्वाद्वम्लं सान्द्रमधुरं कषायानुरसं भवेत् ।
स्वाद्वम्लस्य गुणा ज्ञेयाः सामान्यदधिवज्जनैः ॥

यत्तिरोहितमाधुर्यं व्यक्ताम्लत्वे तदम्लकम् ।
अम्लं तु दीपनं पित्तरक्तश्लेष्मविवर्धनम् ॥

तद्वत्यम्लं दन्तरोमहर्षकण्ठा(द्वि ? दि)दाहकृत् ।
अत्यम्लं दीपनं रक्तपित्तदुष्टिकरं परम् ॥

अन्यत्र—

दध्यवस्थामसम्प्राप्य दुग्धावस्थामतीत्य च ।
अन्तरावर्ति यत् प्रोक्तं मन्दं तच्च त्रिदोषकृत् ॥

विदाहि सृष्टविण्मूत्रमपथ्यं मेहकुष्ठकृत् ।

मन्दम् ।

अव्यक्ताम्लं घनीभूतं दधित्वं प्राप्यते च यत् ।

तज्जातं मधुरं बल्यं वातघ्नं गुरु शुक्रलम् ।

अमन्दम् ।

इति पञ्चविधदधिसामान्यगुणाः ॥

अथ गव्यस्य—

तत्रापि चातिशीतं च दीपनं बलवर्धनम् ।
वातघ्नं मधुरं रूक्षं दधि गव्यं मनोहरम् ॥

अरोचके पीनसमूत्रकृच्छ्रे शीतज्वरे तद्विषमज्वरे च ।
दुर्नामरोगग्रहणीगदे च गव्यं प्रशस्तं दधि सर्वदैव ॥

इति गव्यस्य ॥

अथ ऋतुविशेषे सामान्यतो दधिगुणाः—

शरद्ग्रीष्मवसन्तेषु निन्दितं दधि दोषकृत् ।
हेमन्ते शिशिरे तथ वर्षाकाले बलप्रदम् ॥

अथ महिषस्य—

विपाके मधुरं वृष्यं रक्तपित्तप्रसादनम् ।
बलसंवर्धनं चैव विशेषान्माहिषं दधि ॥

स्निग्धं मधुरशीतं च बलवर्णकरं परम् ।
वृष्यं मेदःकरं स्वादु श्रमघ्नं वातनाशनम् ॥

---

1. All Mss. other than T2. omit this line.

तथा —

माहिषं दधि बलासकारकं वह्निमान्द्यकरणं गुरुत्वकृत् ।
तत्प्रयुज्य कटुकैरवचूर्णं माहिषं च लघुतामुपयाति ॥

इति माहिषदधिगुणाः ॥

अथाजस्य —

दध्याजं कफवातघ्नं लघूष्णं नेत्रदोषनुत् ।
दुर्नामश्वासकासघ्नं रुच्यं दीपनपाचनम् ॥

इत्याजस्य ।

अथ मेष्याः —

मेषीघृतं तु दुर्गन्धि कफपित्तप्रकोपनम् ।
अरुच्यं सुकुमाराणां नराणां न हि तद्धितम् ॥[1]

आविकं दधि सुस्निग्धं कफपित्तकरं गुरु ।
रक्ते च वातरक्ते च पथ्यं शोफव्रणापहम् ॥

इत्यैडक्याः ॥

अथाश्विन्याः —

अश्वीदधि स्यान्मधुरं कषायं कफातिमूर्च्छामयहारि रूक्षम् ।
वातालपदं दीपनकारि नेत्रदोषापहं तत्कथितं पृथिव्याम् ॥

इत्यश्विन्याः ।

अथ गर्दभ्याः —

गर्दभीदधि रूक्षोष्णं लघु दीपनपाचनम् ।
मधुराम्लरसं रुच्यं वातदोषविनाशनम् ॥

इति गर्दभ्याः ।

अथौष्ट्र्स्य—

औष्ट्रमर्शांसि कुष्ठानि क्रिमिशूलोदराणि च ।
निहन्ति कटुकं स्वादु किञ्चिदम्लं रसे दधि ॥

इत्युष्ट्र्याः ।

---

१. T2. omits मेषी... ...तद्धितम्.

२. P1. कुष्ठजं. P2. कुकुजं.

अथ हस्तिन्याः —

हस्तिनीदधि लघूष्णकषायं
पक्तिशूलशमनं रुचिदं च ।
दीप्तिदं लघु बलासनाशनं
वीर्यवृद्धिकरणं बलप्रदम् ॥

इति हस्तिन्याः ।

अथ स्त्रियाः —

विपाके मधुरं बल्यमक्लं सन्तर्पणं गुरु ।
चक्षुष्यं ग्रहदोषघ्नं दधि स्त्रीस्तन्यसम्भवम् ॥

इति स्त्रियाः ।

आग्नेयमेव सर्वेषां गव्यं दधि गुणोत्तरम् ।
वातघ्नं कफकृत्सर्वं बृंहणं च विपक्तिहृत् ॥

कुर्याद्भक्ताभिलापं च दधि मस्तूपरिस्थितम् ।
सशर्करं दधि श्रेष्ठं तृष्णापित्तास्रवातनुत् ॥

सगुडं वातनुद् वृष्यं बृंहणं तर्पणं गुरु ।

अथ दधिमण्डगुणाः —

दध्नो मण्डो गुरुर्वृष्यो विज्ञेयो बलवर्धनः ।
वस्तेर्विंधमनश्चापि कफपित्तविनाशनः ॥

इति मण्डगुणाः ॥

---

१. P1. P2. बिपाक्ति.
२. P1. P2. कुर्याद्रक्ताभिलापम्.

अथ निस्सारदधिगुणाः —

दधि त्वसारं रूक्षं च ग्राहि विड्भेदि वातलम् ।
दीपनीयं लघुतरं सकषायं रुचिप्रदम् ॥

दधिविषयाः —

ग्रहण्यां पीनसे मूत्रकृच्छ्रे च विषमज्वरे ।
अरोचके च मन्दाग्नौ शस्यते दधि सर्वदा ॥

लवणमरिचसर्पिःशर्करामुद्गधात्री-
कुसुमरसविमिश्रं वा तदद्यात्तु नित्यम् ।
न च शरदि वसन्ते नोष्णकाले न रात्रौ
न दधि कफविकारे पित्तरोगे तथाद्यात् ॥

अन्यच्च,

एलासैन्धवशर्करामरिचकैर्धात्रीगुडैः सर्पिषा
पथ्यं स्याद्वरमुद्गसूपसहितं संसेवनीयं दधि ।
नैवोष्णं बहुपिच्छलं च न शरद्ग्रीष्मे वसन्ते हितं
पित्तासृग्ज्वरकुष्ठदं भ्रमकरं वीसर्पदं चान्यथा ॥

दधि त्रिकटु[1]विमिश्रं राजिकाचूर्णयुक्तं
कफहरमनिलघ्नं वह्निसन्धुक्षणं च ।
तुहिनशिशिरकाले सेवनीयं च पथ्यं
भवति सदृशकायो रूपवान् सत्त्ववांश्च ॥

सगुडदधि सुखोष्णं धौतवस्त्रेण सम्यग्
युवतिकरविलासैर्गालितं धूपितं च ।
शिशिरकिरणविश्वा[2]जाजिचूर्णेन मिश्रं
त्वधिकतरविलासैः सेवनीयं हितं च ॥

मधुरं भक्षयेच्चैतदत्यम्लं वर्जयेत् सदा ।
मधुरं दधि रोगघ्नमत्यम्लं रोगकारणम् ॥

---

१. T2 तु कटु, and adds कटु त्रिकटु before the next verse.

२. T1 शुण्ठीजीर and adds शिशिरकिरणः कर्पूरः before the next verse.

अथ शिखरिण्यः —

अर्धाढकं सुचिरपर्युषितस्य दध्नः
खण्डस्य षोडशपलानि शशिप्रभस्य ।
सर्पिः पलं मधु पलं मरिचं द्विकर्षं
शुण्ठ्याः पलार्धमपि वार्धपलं चतुर्णाम् ॥

श्लक्ष्णे पटे ललनया मृदुपाणिघृष्टे
कर्पूरचूर्णसुरभीकृतचारुसंस्था ।
एषा वृकोदरकृता सरसा रसाला
ह्यास्वादिता भगवता मधुसूदनेन ॥

इति भीमसेनशिखरिणी ॥

अन्यत्रापि,

आदौ माहिषमम्लमम्बुरहितं दध्याढकं शर्करां
शुभ्रां प्रस्थयुगोन्मितां शुचिपटे किञ्चिच्च किञ्चित् क्षिपेत्
दुग्धेनार्धघटेन मृन्मयनवस्थाल्यां दृढं स्रावये-
देलाबीजलवङ्गचन्द्रमरिचैर्योग्यैश्च तद्योजयेत् ॥

एषा यैर्न वसन्तवर्जितदिने संसेव्यते नित्यश-
स्तस्य स्यादतिवीर्यवृद्धिरनिशं सर्वेन्द्रियाणां बलम् ।

ग्रीष्मे तथा शरदि ये रविशोषिताङ्गा
ये च प्रमत्तवनितासुरतातिखिन्नाः ।
ये चापि मार्गपरिसर्पणशीर्णगात्रा-
स्तेषामियं वपुषि पोषणमाशु कुर्यात् ॥

इत्यन्या शिखरिणी ॥

त्रिंशत्पलानि दध्नश्च त्वगेलार्धपलं तथा ।
मध्वाज्यस्य पलार्धं च मरीचानां पलार्धकम् ॥

पलान्यष्टौ च खण्डस्य पटे शुक्ले च धारयेत् ।
कर्पूरवासिते भाण्डे छायायां स्थापयेदिदम् ॥

एषा शिखरिणी युक्ता प्रदीप्तिबलवर्धिनी ।
सदा पथ्या नियोज्या च क्षीणे देहे च पुष्टिदा ॥
आयुःप्रवर्धनी चैव सर्वरोगप्रमर्दिनी ॥

इत्यपरा शिखरिणी ॥

सुजातं दधि संयोज्य वस्त्रे बद्ध्वा सुपीडितम् ।
नानापुष्पफलारूपं कुर्यादतिमनोहरम् ॥
कपित्थमातुलुङ्गैलासारिवार्द्रकबीजकैः ।
शर्कराशुण्ठिलशुनमरीचैरेकसंयुतैः ॥
पूतं दधिरसं श्रेष्ठं सुघृतं शोधितं पटे ।
लवणेन समायुक्ता शिखरिण्यमृतोपमा ॥
रसाला सर्वरोगघ्नी रक्तपित्तनिबर्हिणी ।
दीपनी बृंहणी स्निग्धा मधुरा शिशिरा सरा ॥
रक्तपित्ततृषादाहान् प्रतिश्यायं विनाशयेत् ।

इति रसाला शिखरिणी ॥

नारङ्गं दाडिमं स्यात्पक्वमधुकयुतं मातुलुङ्गस्य तोयं
द्राक्षातोयं समांशं गुडदधिसहितं शर्कराराजिमिश्रम्[1] ।
शुभ्रे पट्टे च घृष्ट्वा मरिचकसहितं सैन्धवं वाप्य तद्व-
न्निष्पीड्यं सर्वमेतद् भवति शिखरिणी राजभोज्यैकयोग्या[2] ॥

इयमन्या शिखरिणी ।

मातुलुङ्गसिताजाजीमरीचार्द्रकनागरैः ।
कर्पूरसलिलैर्युक्ता दधि पर्युषितैस्समा ॥
रसयोगेषु सर्वेषु बदरस्य समस्य च ।
नागरस्य रसोन्मिश्रा सा रसालामृतोपमा ॥

---

१. T₁. Gives a different reading also 'मोहरीजाजिमिश्रम्' ।

२. T₂. adds राजी मोहरी । अजाजीति वा पाठः तदा जीरकं पट्टे वस्त्रे वाप्य क्षिप्त्वा before इयमन्या शिखरिणी ।

अच्छे पटे च सङ्घृष्टा वातरोगनिवर्हिणी ।
चन्द्रामृतस्राविणीयं नाम्ना शिखरिणी मता ॥

चन्द्रामृतस्राविणी ।

मातुलुङ्गकपित्थाम्लातित्तिडीकाम्लदाडिमैः ।
शर्कराराजिसंयुक्तैः शुचिपट्टे नियोजिता ॥
नागरामरिचाजाजिचतुर्जातकभूस्तृणैः[1] ।
सुयुक्तार्द्रकसंयुक्ता रसाला सामृतोपमा ॥
सर्वरोगप्रशमनी दाहपित्तनिबर्हिणी ।
रक्तोद्रेककरी पथ्या सर्ववातानुलोमनी ॥
एषा शिखरिणी रम्या सुषेणेन विनिर्मिता ।

सुषेणशिखरिणी ।

तथा —

दधिसर्पिर्गुडैर्जाजिनागरार्द्रकयोजितैः ।
सचतुर्जातघृष्टैश्च रसालैषाऽमृतोपमा ॥
सर्वकृच्छ्रप्रशमनी सर्वातीसारनाशनी ।
सुषेणदेवेन कृता रसालैषामृतोपमा ॥

इत्यपरा सुषेणशिखरिणी ।

निघण्टौ —

द्वात्रिंशत्पलसम्मितं दधि पलान्यष्टौ च खण्डं पल-
स्यार्धं चेन्मरिचस्य तेन तुलितं शुक्तं त्वगेलाद्वयम् ।
मध्वाज्यं च युतं तदर्धमिलितैः संशोधितैर्योजिता
भाण्डे स्याद्धिमवासिता शिखरिणी श्रीकण्ठभोग्या गुणैः ॥

इति ।

॥ इति शिखरिणीप्रकरणम् ॥

अथ सरस्य मस्तुनश्च गुणाः —

दध्नस्तूपरि यो भागो घनः स्नेहसमन्वितः ।
स लोके सर इत्युक्तो दध्नो वारि तु मस्त्विति ॥

---

१. P1 P2 चतुर्जातप्रभूतृणैः ।

सरः स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशनः ।
सोऽम्लो वस्तिप्रधमनः पित्तश्लेष्मविवर्धनः ॥

इति सरः ।

अथ मस्तु--

स्रोतश्शुद्धिं विधत्ते प्रकटयति रुचिं दीपयत्याशु वह्निं
कृत्वा शुद्धिं मलानां जरयति च हठाद् भुक्तमन्नं विचित्रम् ।
उष्णं चाम्लं कषायं लघु सुरभिरसं शूलविष्टम्भहारि
श्रेष्ठं मस्तु प्रशस्तं कफपवनरुजादुष्टमूत्रग्रहेषु ॥

इति मस्तु ।

अथ तक्रम् । तस्य चातुर्विध्यमाह सुषेणः —

घोलं मथितमुदश्वित् तक्रं चैतच्चतुर्विधं कथितम् ॥ इति ॥

तल्लक्षणं तु —

ससरं निर्जलं घोलं मथितं सरवर्जितम् ।
पादोदकमुदश्वित्तत् तक्रमर्धजलं भवेत् ॥

सरवन्निर्जलं मथितं घोलं असरवन्निर्जलं मथितं तन्मथितसंज्ञकमित्यर्थः । अथ तद्गुणाः --

घोलं मारुतपित्तहारि मथितं श्वासापहं श्लेष्महृत्
पित्तश्लेष्मविनाश्युदश्विदधिकं तक्रं त्रिदोषापहम् ।
मन्दाग्नावरुचौ तथैव नितरामन्येषु रोगेष्वपि
श्रेष्ठं तक्रमिदं वदन्ति मुनयस्तेनोत्तमं प्राणिनाम् ॥

यथा सुराणाममृतं प्रधानं
तथा नराणां भुवि तक्रमाहुः ।
अम्लेन वातं मधुरेण पित्तं
कफं कषायेण निहन्ति सद्यः ॥

गव्यं तु दीपनं तक्रं मेध्यमर्शस्त्रिदोषजित् ।
माहिषं श्लेष्मलं तक्रं सान्द्रं शोफकरं गुरु ॥

हन्ति गुल्ममतीसारप्लीहार्शोग्रहणीगदान् ।
सुस्निग्धं छागलं तक्रं लघु दोषत्रयापहम् ॥

गुल्मार्शोग्रहणीशोफपाण्ड्वामयविनाशनम् ।
तक्रं त्वजाविप्रभवं न सेव्यमतिदुर्गन्धं त्रिषु चाप्यपथ्यम् ।

अन्यतक्राणामपेयतया ग्रन्थगौरवभयाच्च नेह गुणा निरूपिता अन्यतो ज्ञेयाः ।

स्वादु वृष्यं रुचिकरं श्लेष्मलं पित्तनाशनम् ।
अम्लं तक्रं पवनजित् पित्तश्लेष्मप्रकोपनम् ॥

तक्रं तल्लवणोपेतं दीपनं ग्रहणीगदे ।
तक्रं लवणहीनं यद् ग्रहण्यर्शोविकारकृत् ॥

वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम् ।
कफे पित्ते तथा तक्रं व्योषक्षारसमन्वितम् ॥

स्थौल्यं करोति हरतेऽनिलमेतदेव
यत्नोष्णतामुपगतं तु कदाचिदेव ॥

एवकारोऽप्यर्थे ।

सहनवनीतं घोलं मथितं कथयन्ति बहुगुणं सुधियः ।
चिरमथितं मथितं पुनरुत्पत्तिकरं नरस्य दोषाणाम् ॥

नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले ।
न मूर्छाभ्रमदाहेषु न रोगे रक्तपित्तके ॥

तक्रमामं कफं हन्ति कोष्ठे कण्ठे करोति च ।
पीनसश्वासकासादौ पक्वमेव प्रयुज्यते ॥

कैलासे यदि तक्रमस्ति गिरिशः किं नीलकण्ठो भवे-
द्वैकुण्ठे यदि कृष्णतामनुभवेदद्यापि किं केशवः ।

---

१. P1. P2. T1. omit this line.

इन्द्रो दुर्भगतां क्षयं द्विजपतिर्लम्बोदरत्वं गणाः
कुष्ठित्वं च कुबेरको दहनतामग्निश्च किं विन्दति ॥

शशिकुन्दसमप्रभशङ्खनिभं युवतीकरनिर्मितनिर्मथितम् ।
परिपक्वकपित्थसुगन्धिरसं पिब भो नृप तक्रमनन्तगुणम् ॥

आमातिसारे च विषूचिकायां वातज्वरे पाण्डुषु कामिलायाम् ।
प्रमेहगुल्मोदरवातशूले नित्यं पिबेत्तक्रमरोचके च ॥

अपि च,

शीतकालेऽग्निमान्द्ये च कफे पाण्ड्वामयेषु च ।
मार्गोपरोधे कुष्ठादिव्याधौ तक्रं प्रशस्यते ॥

वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ।
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥

तक्रं देयं न क्षते नोष्णकाले
नो दौर्बल्ये नो तृषामूर्च्छिते च ।
नैव भ्रान्तौ नैव पित्तास्रदोषे
नो दद्यात्तत् सूतिकायां विशेषात् ॥

भोजस्तु तक्रस्य दश भेदान् गुणभेदांश्चाह —

करमथितमथितोदश्वित्तक्रदण्डाहतगौडिकानि ।
कालसेयकखाडवकमिलितातिमिलितानि दश भवन्ति ॥ इति ।

तल्लक्षणानि तु —

सस्नेहं करमथितं निःस्नेहं मथितमजलमुभयं तत्[1] ।
पादाम्बूदश्वित् स्यात् तक्रं त्वर्धांशसलिलं[2] स्यात् ॥

दण्डाहतं त्रिपादोदकयुक्तं गौडिकं समांशजलम् ।
गौडादस्मात् क्रमशः पादं पादं प्रवर्धितैः सलिलैः ॥

कथितानि कालसेयकखाडवकमिलितातिमिलितानि ।

---

१. $P_1$; $P_2$; $T_1$. रुथितमसलिलमु ।
२. $P_1$; $P_2$; $T_1$. तु सार्धसलिलं ।

अथ क्रमेण तद्गुणाः —

करमथितं गुरु हृद्यं बल्यं वृष्यं क्रमानिलघ्नं च ।
मेध्यं दीपनमग्नेः पाण्डुत्वाच्छित् प्रमेहकृच्छ्रहरम् ॥

हिमकुन्दशशिप्रभशङ्खनिभं परिपक्वकपित्थसुगन्धिरसम् ।
तदिदं भुवि सर्वरुजापहरं युवतीकरनिर्मथितं मथितम् ॥

उदश्विदभिघातघ्नं गुल्मपाण्ड्वनिलापहम् ।
ग्रहणीयक्ष्महृद्रोगप्रमेहार्शोहरं लघु ॥ ३ ॥

तक्रं लघु कषायाम्लं दीपनं कफवातजित् ।
शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः ॥

किलासकुष्ठहृद्रोगशोफोदस्तक्षमकामिकाः ।

हन्यादिति शेषः ॥ ४ ॥

दण्डाहतं प्रमेहघ्नं रुच्यं दीपनपाचनम् ॥

गौडिकं वृष्यमोजस्यं विषघ्नं दीपनं परम् ।
आमदोषहरं मेहग्रहोदरकफापहम् ॥

कालसेयं प्रतिश्यायगरशोषमदापहम् ।
ग्रहण्यर्शोविकारघ्नं दीपनीयं रुचिप्रदम् ।
खाडवं कफगुल्मार्शोहरं च व्रणहृल्लघु ॥

मिलितं रुचिकृद् ग्राहि पक्वातीसारनाशनम् ।
चक्षुष्यं शोषदुर्नामकुष्ठनाडीव्रणापहम् ॥

सर्वदोषहरं पथ्यं मिलितं त्वतिपूर्वकम् ।
भगन्दरोदरग्रन्थिगुल्मार्शोमुखरोगजित् ॥

सुषेणः —

तक्रस्योपरि यत्तोयमुदश्विदिति कीर्तितम् ।
दध्नस्तूपरि यत्तोयं तन्मस्तु परिकीर्तितम् ॥ इति ।

अथ किलाटादीनां लक्षणानि गुणाश्चोच्यन्ते —

वस्याः किलाटपीयूषकूचिकामोर(णा ? टा)दयः ॥

शुक्रनिद्राकफकरा विष्टम्भिगुरुदोषलाः।
पीयूषो नवदुग्धं स्यात् सप्ताहान्मोर(णं ? टं)मश्लिनम् ॥

दधिकूचिका च दध्ना पक्वं(?)तक्रेण तक्रकूचिका।
पिण्डस्तयोः किलाटो दधिमण्डो मस्तुजातदधि मन्दम् ॥

दध्युत्तरो दधिसरो दध्यग्रः खट्वरो दधिस्नेहः। इति।

अत्र आदिशब्दात् तक्रपिण्डकसङ्ग्रहः। घनवस्त्रविबन्धेन स्वयं स्रुतो द्रवभागः तक्रपिण्डकः। दोषलाः आमसञ्चयकारिणः। न तु वातादीनां, कफस्य पृथगभिधानात्। तन्त्रान्तरे वातघ्नत्वाभिधानाच्च ॥

इति तक्रप्रकरणम्।

---

अथ नवनीतस्य

शीतं वर्णबलावहं सुमधुरं वृष्यं च पित्तापहं
वातघ्नं कफकारकं रुचिकरं सर्वाङ्गशूलापहम्।

कासघ्नं श्रमनाशनं स्वरकरं कान्तिप्रदं पुष्टिदं
चक्षुष्यं नवनीतमुद्धृतनवं गोस्सर्वदोषापहम् ॥

उद्धृतनवं नवोद्धृतमित्यर्थः।

क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगनुत् ॥

इति गव्यस्य।

माहिषं नवनीतं तु कषायमधुरं रसे।
शीतं वृष्यं च बल्यं च ग्राहि पित्तघ्नमुत्तमम् ॥

इति माहिषस्य।

लघ्वजाजं तु मधुरं कषायं च त्रिदोषनुत् ।
चक्षुष्यं दीपनं बल्यं नवनीतं हितं सदा ॥

कुहीचें ।

नवनीतं नवोद्भूतं छागजं क्षयकासजित् ।
बल्यं नेत्रामयघ्नं च कफघ्नं दीपनं परम् ॥

सेलीचें ।

आविकं नवनीतं तु रसे पाके हितं लघु ।
योनिशूले कफे वाते दुर्नामसु हितं सदा ॥

एडकीचें ।

मेडकं नवनीतं तु द्विष्टगन्धं सुशीतलम् ।
मेधाहृद् गुरु पुष्टयं च स्थौल्यं मेध्यं च दीपनम् ॥

मेढीचें ।

हस्तिनीनवनीतं तु कषायं शीतलं लघु ।
तिक्तं विष्टम्भि जन्तुघ्नं हन्ति पित्तकफक्रिमीन् ॥

हस्तिणीचें ।

अश्व्यास्तु नवनीतं स्यात् कषायं कफवातजित् ।
चक्षुष्यं कटुकं चोष्णमीषद्वातापहारकम् ॥

घोडीचें ।

गर्दभीनवनीतं तु कषायं कफवातनुत् ।
बल्यं दीपनदं पाके लघूष्णं मूत्रदोषनुत् ॥

गर्दभीचें ।

नवनीतं तु नारीणां रुच्यं पाके लघु स्मृतम् ।
चक्षुष्यं सर्वदोषघ्नं दीपनं विषनाशनम् ॥

नारीचें

गव्यं वा माहिषं वापि नवनीतं नवोद्धृतम् ।
शस्यते बालवृद्धानां बलकृद् धातुवर्धनम् ॥
नवनीतं तु सद्यस्कं स्वादु ग्राहि हिमं लघु ।
मेध्यं किञ्चित् कषायाम्लमीषत्तक्रांशसंक्रमात् ॥

सक्षारं कटुकाम्लत्वात् छर्द्यर्शःकुष्ठकारकम् ।
श्लेष्मलं गुरु मेदस्यं नवनीतं चिरन्तनम् ॥

एकाहाद्युषितं प्रोक्तमुत्तरोत्तरमाविलम् ।
अहृद्यं सर्वरोगाढ्यं दधिजं तद्; घृतं तथा ॥

दाधिजं नवनीतम् ।

इति नवनीतप्रकरणम् ।

---

अथ घृतम् ।

श्रीकान्तिस्मृतिदायकं बलकरं मेधाप्रदं पुष्टिकृद्
वातश्लेष्महरं श्रमोपशमनं पित्तापहं शुद्धिकृत् ।
वह्नेर्वृद्धिकरं विपाकमधुरं वृष्यं वपुःस्थैर्यदं
गव्यं हव्यतमं घृतं बहुगुणं सद्यः समावर्तितम् ॥

गव्यस्य ।

सर्पिर्माहिषमुत्तमं धृतिकरं सौख्यप्रदं कान्तिकृद्
वातश्लेष्मनिबर्हणं बलहरं वर्णप्रधानक्षमम् ।
दुर्नामग्रहणीविकारशमनं मन्दानलोदीपनं
चक्षुष्यं नवगव्यतः परमिदं हृद्यं मनोहारि च ॥

माहिषस्यैते गुणाः ।

आजमाज्यं च चक्षुष्यं दीपनं बलवर्धनम् ।
कासश्वासकफातङ्कराजयक्ष्मसु शस्यते ॥
ततः किञ्चिन्न्यूनगुणं लघ्वजाज्यमुदीरितम् ॥

सेळीचें ।

पाके लघ्वाविकं सर्पिर्न च पित्तप्रकोपनम् ।
योनिदोषे कफे वाते शोफे कम्पे च तद्धितम् ॥

एडकीचें ।

भेडकं घृतमतीव गौरवाद्वर्ज्यमेव सुकुमारदेहिनाम् ॥
बुद्धिपाटवकरं बलावहं द्विष्टगन्धि कुरुते नृणां वपुः ॥

मेढीचें ।

---

१. J1. omits this line

२. J1. दुष्टगन्धि ।

निहन्ति हस्तिनीसर्पिः कफपित्तविषक्रिमीन् ।
कषायं लघु विष्टम्भि तिक्तं चाग्निकरं परम् ॥

हस्तिनीचें ।

अश्वीसर्पिस्तु कटुकं मधुरं च कषायकम् ।
ईषच्च दीपनं मूर्च्छाहारि वातालपदं गुरु ॥

घोडीचें ।

घृतं गार्दभिकं बल्यं दीपनं मूत्रदोषनुत् ।
पाके लघूष्णं वीर्ये च कषायं कफनाशनम् ॥

खरीचें ।

औष्ट्रीघृतं वीर्यकटु श्लेष्मक्रिमिविषापहम् ।
दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥

उष्ट्रीचें ।

चक्षुष्यमग्निदं स्त्रीणां सर्पिः स्यादमृतोपमम्
वृद्धिं करोति देहाग्नेर्लघु पाके विषापहम् ॥

स्त्रीघृतगुणाः ।

आयुर्वृद्धिं वपुरपि दृढं सौकुमार्यं करोति
व्यायामस्त्रीनिधुवनकृतश्रान्तिविच्छेदनं च ।
पथ्यं बाल्ये वयसि तरुणे वार्धके चापि पथ्यं
नान्यत् किञ्चिद् भवति पुरुषे सर्पिषः स्थौल्यकारि ॥

यद्वेदागमवेदिभिर्निगदितं साक्षादिहायुर्नृणां
यद्वैद्यैस्तु रसायनाय कथितं सद्यो जरानाशनम् ।
यत्सारस्वतकं च कान्तिमतिमत् प्रोक्तं धियः सिद्धये
तत्पूर्वार्जितपुण्यसञ्चयवता लभ्यं घृतं नूतनम् ॥

वर्षादूर्ध्वं भवेदाज्यं पुराणं तत् त्रिदोषनुत् ।
पुराणं तिमिरश्वासपीनसज्वरकासनुत् ॥

मूर्च्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् ।
उग्रगन्धि पुराणं स्याद् दशवर्षस्थितं घृतम् ॥

लाक्षारसानिभं शीतं तद्धि सर्वग्रहापहम् ।

निरामयानां नवयौवनानां कृत्वा गवां यच्छत धौतमद्भिः ।
दाहापहं पित्तविनाशनं च सहस्रवीर्यं तु सहस्रधौतम् ॥
गव्ये क्षीरघृते शस्ते निन्दिते चाविसंभवे ।

अथ दुग्धोद्धृतघृतगुणाः —

घृतं दुग्धभवं ग्राहि शीतलं नेत्ररोगनुत् ॥
निहन्ति पित्तदाहास्रमदमूर्च्छाभ्रमानिलान् ॥

अथ ह्यस्तनदधिजघृतगुणाः—

ह्यस्तनदुग्धोत्थं तत्स्याद्धैयङ्गवीनकम् ।
हैयङ्गवीनं चक्षुष्यं दीपनं रुचिकृत्परम् ॥
बलकृद् बृंहणं वृष्यं विशेषात् कफनाशनम् ।
योजयेन्नवमेवाज्यं भोजने तर्पणे श्रमे ॥
बलक्षये पाण्डुरोगे कामलानेत्ररोगयोः ।
राजयक्ष्मणि बाले च वृद्धे श्लेष्मकृते गदे ॥
रोगे सामे विषूच्यां च विबन्धे च मदात्यये ।
ज्वरे च दहने मन्दे न सर्पिर्बहुमन्यते ॥

इति घृतप्रकरणम् ॥

---

## अथ तैलप्रकरणम्

तद्गुणानाह वाग्भटः —

तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च ।
त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च ॥
कृशानां बृंहणायालं स्थूलानां कर्शनाय च ।
बद्धविट्कं कृमिघ्नं च संस्कारात् सर्वदोषजित् ॥

अन्यत्रापि —

तिलतैलमलङ्करोति केशान् मधुरं तिक्तकषायमुष्णतीक्ष्णम् ।
बलकृत् कफवातजन्तुखर्जुव्रणकण्डूतिहरं च कान्तिदायि ॥

इति तिलतैलगुणाः

---

१. J1. अथ दुग्धोत्थ ।
२. J1. Bh. बद्धविट्कं ।
३. T3. adds. मुख्यं तिलभवं त्वग्दोषं कृन्ततीति त्वग्दोषकृत् ।

कुसुम्भतैलं कृमिहारि तेजोबलावहं यक्ष्ममलापहं च ।
त्रिदोषकृत् पुष्टिबलक्षयं च करोति कण्डूं च करोति दृष्टेः ॥

इति कौसुम्भतैलगुणाः ॥

मधुरं त्वतसीतैलं पिच्छलं चानिलापहम् ।
मदगन्धि कषायं च कफकासापहारकम् ॥

येसेलगुणाः[1] ।

एरण्डतैलं कृमिदोषनाशनं वातामयघ्नं सकलाङ्गशूलनुत् ।
कुष्ठापहं स्वादु रसायनोत्तमं पित्तप्रकोपं कुरुतेऽतिदीपनम् ॥
पिच्छलं कटु तिक्तोष्णं रक्तैरण्डोद्भवं त्वति ॥

एरण्डतैलगुणाः[2] ।

करञ्जतैलं नयनार्तिहारि[3] वातामयध्वंसनमुष्णतीक्ष्णम् ।
कुष्ठार्तिकण्डूतिविचर्चिकापहं लेपेन नानाविधचर्मदोषनुत् ॥

करंजतैल[4] ।

सार्षपं कटु तिक्तोष्णं कफवातविकारनुत् ।
क्रिमिकुष्ठहरं रक्तपित्तदोषकरं परम् ॥

सिरसेल ।

तीक्ष्णोष्णं तुवरीतैलं लघु ग्राहि कफास्रजित् ।

---

१. J1. शेयेल ।
२. J2. has रक्तेरंडेल । Bh has the additional verses :—

आमवातगजेन्द्राणां शारीरवनचारिणाम् ।
एक एवाग्रणीर्हन्ता एरण्डस्नेहकेसरी ॥
अधोभागिकमेरण्डमन्येषां तिलवत् स्मृतम् ।
सर्वधान्यसमावर्त्तिविदलीफलकानि च ॥
तिलवर्गेकृतो लेपः खर्जुकण्डूविनाशनः ।

before एरण्डतैलगुणाः ।
३. J1. नयनार्तिनाशनं
४. J1. करंजेल ।

वह्निकृद्विषहृत् कण्ठकुष्ठकोष्ठक्रिमिप्रणुत् ।
मेदोदाहापहं चापि व्रणशोथहरं परम् ॥

तुरीचेंतेल ।

यावनालव्रीहियवगोधूमादिसमुद्भवम् ।
त्रिदोषघ्नं कण्डुकुष्ठहारि चक्षुष्यमुत्तमम् ।

इति धान्यतैलगुणाः ।

तथैव चेङ्गुदीतैलं मधुरं पित्तनाशनम् ।
शीतलं कान्तिदं बल्यं श्लेष्मलं केशवर्धनम् ॥

हिंगणेल ।

निम्बतैलं तु नात्युष्णं क्रिमिकुष्ठकफापहम् ।

निम्बतैल ।

आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलार्तिनुत् ॥

व्याहडेल ।

शिग्रुतैलं कटूष्णं च वातजित् कफनाशनम् ।
त्वग्दोषव्रणकण्डूतिशोफहारि च पिच्छलम् ॥

सेवेंगेल ।

कटु ज्योतिष्मतीतैलं तिक्तोष्णं वातनाशनम् ।
पित्तसन्तापनं मेधाप्रज्ञाबुद्धिविवर्धनम् ॥

ज्योतिष्मतीतैलम् ।

शीतं हारीतकीतैलं कषायमधुरं कटु ।
सर्वव्याधिहरं पथ्यं नानात्वग्दोषनाशनम् ॥

हिरडेल ।

तीक्ष्णं तु राजिकातैलं ज्ञेयं वातादिदोषकृत् ।
शिशिरं कटु कण्डूघ्नं केश्यं त्वग्दोषनाशनम् ॥

मोहरेल ।

---

१. J1. अक्षं ।
२. J1. सेयगेल । Bh. शेगवेल ।

सरं कोशाम्रजं तैलं क्रिमिकुष्ठव्रणापहम् ।
तिक्ताम्लमधुरं बल्यं पथ्यं रोचनपाचनम् ॥

आंबाडेल ।

कर्पूरतैलं रददार्ढ्यकारि वातामयघ्नं कटु पित्तकारि ।

कापुरेल ।

त्रपुसोर्वारुकचारुककूश्माण्डप्रभृतिबीजतैलं यत् ।
तन्मधुरं गुरु शिशिरं केश्यं कफपित्तनाशि कान्तिकरम् ॥

बीजतैल ।

बिल्वमज्जाभवं तैलमुष्णवातहरं परम् ।

बेलेल ।

नारिकेरोद्भवं तैलं बृंहणं बलवर्धनम् ।
केश्यं पित्तानिलहरं मधुरं रसपाकयोः ॥

खोबरेल ।

तैलं सर्जरसोद्भूतं विस्फोटव्रणनाशनम् ।
कुष्ठपामाक्रिमिहरं वातश्लेष्मामयापहम् ॥

राळतैलम् ।

तैलं तु खसबीजानां बल्यं वृष्यं गुरु स्मृतम् ।
वातहृत् कफहृच्छीतं स्वादु पाकरसं च तत् ॥

खसखसेल ।

सहकारभवं तैलं कषायं स्वादु तिक्तकम् ।
मुखरोगहरं रूक्षं सुगन्धि श्लेष्मवातजित् ॥

आम्रतैलम् ।

प्रियालतैलं मधुरं गुरु श्लेष्मविवर्धनम् ।
हितमिच्छन्ति नात्यौष्ण्यात् संयोगे वातपित्तयोः ॥

चारेल ।

---

१. J1. चहेलेल Bh. बेलतैल.

कषायं स्वादु कापित्थं तैलमाखुविषापहम् ।

कविठेल ।

कषायं स्वादु माधूकं तैलं पित्तकफप्रणुत् ।

मोहेल ।

तिलतैलं वरं तेषु कौसुम्भं त्ववरं परम् ।

तैलप्रयोगादजरा निर्विकारा जितक्लमाः ।
आसन्नतिबला युद्धे दैत्याधिपतयः पुरा ॥

[1]राजनिघण्टौ—

तैलं न सेवयेद् धीमान् यस्य कस्य च यद् भवेत् ।
विषसाम्यगुणत्वाच्च योगयोग्यं न वर्जयेत् ॥

उक्तं च ।

विषस्य तैलस्य न किञ्चिदन्तरं मृतस्य सुप्तस्य तथा न किञ्चित् ।
ऋणस्य दासस्य न किञ्चिदन्तरं मूर्खस्य काष्ठस्य च नैव किञ्चित् ॥

इति [2]तैलप्रकरणम् ॥

---

[3]अथेक्षुप्रकरणम् ।

निघण्टौ—

सितेक्षुः कठिनो रुच्यो गुरुश्च कफमूत्रकृत् ।
दीपनः कफदाहघ्नो विपाके कोष्णदः स्मृतः ॥

काठ्याऊंस ।

---

१. J1. omits राजनिघण्टौ... ... ...नैव किञ्चित् ।

२. J1. तैलगुणाः ।

३. J1. अथ इक्षुगुणाः । Bh. इक्षुवर्गः omits the portion सितेक्षुः to... ...रसदालीति नामान्तरम् on page ... ...and simply reads to जात्यादिगुणभेदः सुषेणे द्रष्टव्यः ।

सुषेणः—

स्निग्धश्च सन्तर्पणबृंहणश्च संजीवनः स्वादुरसश्रमघ्नः ।
वृष्यश्च पित्तास्रसमीरहारी त्वन्तर्विदाही कफकृत्सितेक्षुः ॥
तद्वच्च कृष्णोऽपि भवेद् गुणैश्च दाहापहस्तर्पणकृच्च वृष्यः ।
क्षारश्च किञ्चिन्मधुरो रसेन शोषापहर्ता व्रणशोफकर्ता ॥

तद्वत् काष्ठेक्षुवत् ।

निघण्टौ तु—

कृष्णस्तु रूक्षो मधुरश्च पाके स्वादुः सुहृद्यः कटुको रसाढ्यः ।
त्रिदोषहारी समवीर्यदश्च स वीर्यदायी बहुवीर्यदायी ॥

काळांऊस ।

पुण्ड्रोऽतिमधुरः शीतः कफकृत पित्तनाशनः
दाहश्रमहरो वृष्यो रसे सन्तर्पणः परः ॥

पुंड्राऊंस ।

सुषेणस्तु —

पुण्ड्रकस्तु रसालः स्यात् रसेक्षुस्तुकुमारकः ।
कर्बुरो मिश्रवर्णश्च नेपाळश्चेति सप्तधा ॥

इति वाग्भटः । तत्र पौण्ड्रकः —

शैत्यप्रसादमाधुर्यैः वरस्तमनु वांशिकः ।
शातपर्वकनेपालकान्ताराद्यास्ततः क्रमात् ॥
सक्षाराः सकषायाश्च सोष्णाः किञ्चिद्विदाहिनः ।

इति ।

लोहितेक्षुश्च मधुरः पाके स्यात् पिच्छलो मृदुः ।
पित्तदाहहरो वृष्यस्तेजोबलविवर्धनः ॥

तांबडाऊस ।

---

१. J1. adds सक्षारास्सकषायाश्च सोष्णाः किञ्चिद्विदाहिनः ।

२. P1. P2. T2. समवीर्यदश्च वीर्यसाम्यकर्ता स्वस्थानां वीर्यदायी क्षीणानां बहुवीर्यदायी समवीर्याणां वीर्यवृद्धिकर्ता ।

३. T1. T2. P2. Bh. मधुः ।

करङ्कशालिर्मधुरः शीतलो रुचिकृन्मृदुः ।
पित्तदाहहरो वृष्यस्तेजोबलविवर्धनः ॥

रसालः । रसादालीति नामान्तरम् ।

मूलादूर्ध्वं तु मधुरा मध्येऽतिमधुरास्तथा ।
इक्षवस्तेऽग्रभागे तु तथा लवणनीरसाः ॥

अशुक्ते पित्तहन्तारो शुक्ते पित्तप्रकोपनाः ।
शुक्तिमध्ये गुरुतमा इतीक्षूणां गुणास्त्रयः ॥

अथ दन्तनिष्पीडितेक्षुगुणाः ।

वृष्यो रक्तास्रपित्तश्रमशमनपटुः शीतलः श्लेष्मदोऽल्प-
स्निग्धो हृद्यश्च रुच्यो रचयति च मुदं मूत्रशुद्धिं विधत्ते ।
कान्तिं देहस्य दत्ते बलमतिकुरुते बृंहणस्तृप्तिदायी
दन्तैर्निष्पीड्य काण्डे मृदुरतिरसितो मोहनश्चेक्षुदण्डः ॥

तथा —

पीयूषोपमितं त्रिदोषशमनं स्याद्दन्तनिष्पीडितं
तद्वच्चेद्ग्रहयन्त्रजं तदपरं विष्टम्भि गुर्वग्निकृत् ।
किञ्चित्कालधृतं च वातजननं जाड्यप्रतिश्यायदं
प्रोक्तं पर्युषितं कफानिलकरं पानीयमिक्षूद्भवम् ॥

तदपरं महायन्त्रजम् । अग्निकृत् विदाहि । उक्तं च —

गुरुर्विदाही विष्टम्भी यान्त्रिकः परिकीर्तितः ।

इति । वाग्भटः —

जन्तुजग्धातिपीडनान्मलसङ्करात् ।
किञ्चित्कालं विधृत्या च विकृतिं याति यान्त्रिकः ।
गुरुर्विदाही विष्टम्भी तेनासौ परिकीर्तितः ॥

इति ।

---

१. Bh omits तदपरं .......... परिकीर्तित इति ।

अथ तापितरसगुणाः ।

इक्षुरसः परितप्तः स्निग्धः स्यात्कफविनाशनोऽतिगुरुः ।
अतिपाकेन विदाहं तनुते पित्तास्रदोषदोषांश्च ॥

तापिला रस ।

इक्षोरग्रभवं काण्डं प्रतप्तं दृढवह्निना ।
रसस्तदुद्भवः कुर्यादतिसारं बलक्षयम् ॥

तप्तकाण्डगुणाः ।

मधुरो लवणः क्षारः स्निग्धोष्णश्च रुचिप्रदः ।
वृष्यो वातकफघ्नश्च यावनालेक्षुजो रसः ॥

जोंधल्याच्या उंसा चा रस ।

मध्यपर्वदलनाच्च तत्क्षणात्पीयते यदि च यान्त्रिको रसः ।
वातपित्तशमनस्तदा भवेत्तर्पणश्च मलमूत्रशोधनः ॥

मध्यकाण्ड्यां चा रस ।

इतीक्षुप्रकरणम् ॥

---

१. T2. has a large addition in this context:— अथेक्षुरसविकाराः । ते पञ्च । तत्र वाग्भटः —

इक्षो रसस्य समलन्यंशार्धाङ्घ्रिमलामलाः ।
विकाराः फाणितगुडमत्स्यण्डीखण्डशर्कराः ॥

समलं फाणितं राब इति लोके ॥ १ ॥

न्यंशमलः पादोनमलः गुडः ॥ २ ॥

अर्धमला मत्स्यण्डी रायपुरी ॥ ३ ॥

पादमलः खण्डः खडेसाखर ॥ ४ ॥

अमला शर्करा । सिता सितोपलेत्यादयस्तत्पर्यायाः । चीनी खडे साखर ॥ ५ ॥

तत्र फणितगुडानाह —

फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ।
अवृष्यं बृंहणं क्षारं वीर्योष्णं सर्वदोषकृत् ॥

चयकृदविशेषात् दोषत्रयस्य । सर्वदोषकृत् त्रिदोषप्रकोपकृत् ।

गुडः समधुरः क्षारो गुरूष्णः कफवातनुत् ।
अहितः पित्तरक्ते च जीर्णश्चैव रसायनः ॥

अपि च —

पित्तघ्नः पवनार्तिजिद्रुचिकरो हृद्यस्त्रिदोषापहः
संयोगेन विशेषतो ज्वरहरः सन्तापशान्तिप्रदः ।
विण्मूत्रामयशोधनोऽग्निजननः पाण्डुप्रमेहान्तकः
स्निग्धः स्वादुतरो लघुः श्रमहरः पथ्यः पुराणो गुडः ॥

इति नवपुराणगुडाः ॥

---

अन्यत्र —

अभिष्यन्द्यतिमाधुर्यं फाणितं बृंहणं गुरु ।
शुक्रकृत् कफहृच्चैव पित्तघ्नं च विशेषतः ॥

ईक्षो मधुकपुष्पोत्थः फाणितो वातपित्तकृत् ।
कफघ्नो मधुरः पाके विपाके वस्तिदूषणः ॥

इति फाणितम् ।

अथ गुडः । स चतुर्धा धौताधौतपुराणनवभेदेन । तत्र वाग्भटः धौतगुडगुणानाह —

नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद् गुडः ।

सृष्टमूत्रशकृत् मलानुलोमनः । अधौतगुडः —

प्रभूतकृमिमज्जासृङ्मेदोमांसकफप्रदः ।

पुराणगुडगुणः —

हृद्यः पुराणः पथ्यश्चेति । पथ्यः स्वस्य हितः ।

नवगुडगुणः —

नवः श्लेष्माग्निसादकृत् । अग्निसादोऽग्निमान्द्यम् । अन्यत्र गुडस्य भेदाः गुणाश्चोच्यन्ते ।

१. T2. adds after this on this subject :—

केयदेवः —

संवत्सरोषितगुडः पुराण इति कथ्यते ।
वर्षत्रयोषितः सोऽपि प्रपुराणः प्रकीर्तितः ॥
प्रपुराणो वरस्तस्मात् सर्वदोषहरो लघुः ॥

तस्मात्पुराणात् ।

अरिष्टाद्येषु सर्वेषु प्रपुराणं प्रयोजयेत् ।
चतुर्वर्षात्परस्तस्मात् निर्वीर्यो निष्फलो गुडः ॥
कासश्वासादिकान् सर्वान् जनयेत् स विशेषतः ।

इति नवपुराणगुडाः ॥

स्याद्यावनालरसपाकभवो गुडोऽयं
क्षारः कषायमधुरः कफवातहारी ।
पित्तप्रदः सततमेव निषेव्यमाणः
कण्डूतिकुष्ठजननोऽस्रविदाहदायी ॥

जोंधळ्याचा गुड ।

अथ शर्करा —[1]

शुद्धस्फटिकसङ्काशा निर्मला सितशर्करा ।[2]
शर्करा ज्वरपित्तासृङ्मूर्च्छाच्छर्दिविषापहा ॥
श्वासाङ्गमर्दहृल्लासशैत्यशूलहराग्निकृत् ।[3]

तत्र —[4]

स्निग्धा पुण्ड्रकशर्करा हितकरी क्षीणे क्षयेऽरोचके
चक्षुष्या बलबृंहणी सुमधुरा रूक्षा च[5] वंशेक्षुजा ।
वृष्या तृप्तिबलप्रदा श्रमहरा श्यामेक्षुजा शीतला
स्निग्धा शान्तिकरी रसालजनिता रक्तेक्षुजा पित्तजित् ॥

पञ्चेक्षुशर्करा ।[6]

---

$T_1$. The revisor adds this section in the margin transposing the line 'प्रपुराणो ......तस्मात्पुराणात्' to the end with a note — पुराणात् प्रपुराणस्य गुणाधिक्यमाह स एव ।

१. $T_2$. Transposes the शर्करा portion of this section after मत्स्यण्डिका and introduces the present verse with अन्यत्र च शर्करागुणाः —

२. $T_1$. The scribe leaves a blank in the Ms. for this line. Bh. omits the following lines and therein the section begins with the next verse स्निग्धा पुण्ड्रक etc.

३. $T_2$. adds इयं शर्करा सर्वसाधारण्येन ।

४. $T_2$. तत्र विशेषः —

५. $T_2$. has here the explanation: चकारः पूर्वगुणानुवृत्त्यर्थः ।

६. $T_2$. omits the name Bh. omits the name and closes this प्रकरण here with the remark मच्छण्डी शर्करादिगुणाः सुषेणे द्रष्टव्याः । इति शर्करा ॥

[1]मच्छण्डिकादिलक्षणमाह केयदेवः —

इक्षो रसस्य समंलत्र्यंशार्धाङ्घ्रिमलामलाः ।
विकाराः फाणितगुडमच्छण्डीखण्डशर्कराः ॥

इति । [2]गुणाश्च —

मच्छण्डी ग्राहिणी बल्या कषाया वातजिद् गुरुः ।
खण्डं गुरु सरं रुच्यं वातघ्नं बलपुष्टिदम् ॥

सितोपला सरा गुर्वी वातघ्नी न कफप्रदा ॥

इति ।

[3]वृष्या क्षतक्षीणहिता रक्तपित्तानिलापहाः ।
[4]मच्छण्डिकाखण्डसिताः क्रमेण गुणवत्तराः[5] ॥

---

१. J1. omits मच्छण्डिकादि ...................... न कफप्रदा ॥ इति । T1. has this portion after the first line of the verse below: वृष्या क्षतक्षीणहिता etc. This transposition has been effected for the sake of the continuity of the verse as it occurs in the Aṣṭāṅgahṛdaya from which it forms a quotation. T2. omits this introduction and the quotation following.

२. T2. अन्यत्र च मत्स्यण्ड्यादीनां पृथग्गुणाः ।

३. T2. introduces this verse with: अथ मत्स्यण्डिकादीनां त्रयाणां गुणमाह वाग्भटः —. P1. P2. omit this line.

४. J1. The revisor adds in the margin, the following धन्वन्तरिः —

शर्करोक्ता तु मीनाण्डी श्वेता मत्स्यण्डिका मता ।

५. T2. adds the explanation: क्षतक्षीणयोर्हिताः क्रमेणेति । क्रमेणेति मत्स्यण्डिकायाः खण्डो गुणवान्, खण्डात् सिता ।
उक्तं च सुश्रुतेन —

यथा यथैषां वैमल्यं मधुरत्वं तथा तथा ।
स्नेहगौरवशैत्यानि सरत्वं च तथा तथा ॥ इति ।

तद्गुणा[1] तिक्तमधुरा कषाया यासशर्करा ।

त्रिदोषघ्नी[2] पित्तकासेक्षु[3]दर्भच्छदसम्भवा ॥

तत्तुल्या[4] मधुशर्करा । तत्तुल्या मधुसमानगुणेत्यर्थः ।

अभिष्यन्द्यतिमधुरं फाणितं बृंहणं गुरु ।

शुक्रकृत् कफकृच्चैव पित्तघ्नं च विशेषतः ॥

फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ।

अवृष्यं बृंहणं क्षारं वीर्योष्णं सर्वदोषकृत् ॥

इति कैयदेवः ।

शर्करा तु सितोपला ।

सिता च मधुधूलिस्तु खण्डस्तद्विकृतिः पुनः ॥

'मच्छण्डिका फाणितं चापि' इति हैमनः ।

रूक्षो मधूकपुष्पोत्थः फाणितो वातपित्तकृत् ।

कफघ्नो मधुरः पाके विपाके वस्तिदूषणः ॥

शर्करेक्षुविकाराणां फाणितं च वरावरे ।

हिमजा शर्करा शैत्या सोऽल्पा तिक्ता त्वपिच्छला ॥

---

१. T2. introduces this verse with:— यासशर्करागुणानाह वाग्भटः and has the following explanation at the close of the line:— तद्गुणा मत्स्यण्डिकादिसामान्यसदृशगुणाः । यासशर्करा दुरालभारसेनेक्षुरसन च क्रियते ।

२ T2. omits this line.

३. T2. सिता कासेक्षु । T1. सितकासेक्षु ।

४.. T2. has on मधुशर्कराः — मधुशर्करागुणमाह —

यद्गुणं यन्मधु प्रोक्तं तद्गुणा तस्य शर्करा ।

विशेषात्तर्पणी बल्या पुष्ट्या च क्षीणदेहिनाम् ॥

वह्निपाकात् कालपाकाद्वा शर्करारूपतां गतं मधु मधुशर्करा । तद्गुणा मधुसदृशगुणा । The Ms. continues:— सामान्यशर्करागुणमाह वाग्भटः —

दाहतृट्छर्दिमूर्च्छासृक्पित्तघ्न्यः सर्वशर्कराः ।

सर्वा उक्ताः मत्स्यण्डिकाद्याः मधुशर्करा च । मत्स्यण्डिकादौ रक्तपित्तहरत्वग्रहणमतिशयार्थम् ।

वातघ्नी सारिका रुच्या दाहपित्तास्रदायिनी ।

गुडगुडा ।

सितखण्डोऽतिमधुरश्चक्षुष्यश्छर्दिनाशनः ।
कुष्ठव्रणकफश्वासहिक्कापित्तास्रदोषजित् ॥

वालखंड ।

वृष्या क्षतक्षीणहिता रक्तपित्तानिलापहाः ।
मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तराः ॥

क्षतक्षीणयोर्हिताः । क्रमेणेति । मत्स्यण्डिकायाः खण्डो गुणवान्, खण्डात् सिता । उक्तं च सुश्रुतेन —

यथा यथैषां वैमल्यं मधुरत्वं तथा तथा ।
स्नेहगौरवशैत्यानि सरत्वं च तथा तथा ॥

इति ।

अन्यत्र च मत्स्यण्ड्यादीनां पृथग् गुणाः ।

मत्स्यण्डी ग्राहिणी बल्या कषाया वातजिद् गुरुः ।
खण्डं गुरु सरं रुच्यं वातघ्नं बलपुष्टिदम् ।
सितोपला सरा गुर्वी वातघ्नी न कफप्रदा ।

इति ।

यासशर्करागुणानाह वाग्भटः —

तद्गुणा तिक्तमधुरा कषाया यासशर्करा ।

तद्गुणा मत्स्यण्डिकादिसामान्यसदृशगुणा ।

यासशर्करा दुरालभारसेनेक्षुरसेन च क्रियते ।

मधुशर्करागुणमाह —

यद्गुणं यन्मधु प्रोक्तं तद्गुणा तस्य शर्करा ।
विशेषाच्चर्पणी बल्या पुष्ट्या च क्षीणदेहिनाम् ॥

---

१. J1. omits अथ ... ... ... ... वाग्भटः and it reads अथ शर्करा ।

२. J1. adds: धन्वन्तरिः —

शर्करोक्ता तु मीनण्डी श्वेता मत्स्यण्डिका सिता ।

in the margin and reads this portion after रक्तेक्षुजा पित्तजित् ।

वह्निपाकात् कालपाकाद्वा शर्करारूपतां गतं मधु मधुशर्करा । तद्गुणा मधुसदृशगुणा ।

सामान्यशर्करागुणमाह वाग्भटः —

दाहतृट्छर्दिमूर्च्छासृक्पित्तघ्न्यः सर्वशर्कराः ।

सर्वा उक्ता मत्स्यण्डिकाद्याः मधुशर्करा च । मत्स्यण्डिकादौ रक्तपित्तहरत्वग्रहणमतिशयार्थम् । अन्यत्र च शर्करागुणाः —

शुद्धस्फाटिकसङ्काशा निर्मला सितशर्करा ।
शर्करा ज्वरपित्तासृङ्मूर्च्छाच्छर्दिविषापहा ॥
श्वासाङ्गमर्दहृच्छ्वासश्वैत्यशूलहराग्निकृत् ।

इयं शर्करा सर्वसाधारण्येन । तत्र विशेष —

स्निग्धा पुण्ड्रकशर्करा हितकरी क्षीणे क्षयेऽरोचके
चक्षुष्या बलबृंहणी सुमधुरा रूक्षा च वंशेक्षुजा ।

चकारः पूर्वगुणानुवृत्त्यर्थः ।

वृष्या तृप्तिबलप्रदा श्रमहरा श्यामेक्षुजा शीतला
स्निग्धा शान्तिकरी रसालजनिता रक्तेक्षुजा पित्तजित् ॥

त्रिदोषघ्नी सिता काशेक्षुदर्भच्छदसंभवा ।
क्षतक्षयहरा दाहरक्तपित्ततृषापहा ।
स्निग्धा पथ्या हिमा स्वाद्वी सक्षारा गुडशर्करा ॥

गुडगुडा ।

सितखण्डोऽतिमधुरश्चक्षुष्यश्छर्दिनाशनः ।
कुष्ठव्रणकफश्वासहिक्कापित्तास्रदोषजित् ॥

पालखेड ।

तवराजोऽतिमधुरः पित्तश्रमतृषापहः ।
वृष्यो विदाहमूर्च्छार्तिभ्रान्तिशान्तिकरः सरः ॥

तवराज

---

१. J1. T2. Bh. omit इयं... साधारण्येन ।

दाहं निवारयति तापमपाकरोति
  तृष्णां नियच्छति निहन्ति च मोहमूर्च्छाम् ।
श्वासं निवारयति तर्पयतीन्द्रियाणि
गीतस्सदा सुमधुरः खलु सिद्धखण्डः ॥

खण्डतवराजः ।

अथेक्षुविकाराणां तारतम्यमाह वाग्भटः
  शर्करेक्षुविकाराणां फाणितं च वरावरे ।
इक्षुविकाराणां मध्ये शर्करा सिताख्या वरा फाणितमवरं इतरे मध्यमाः ॥

इतीक्षुरसविकारप्रकरणम् ।

---

अथ मधु ।

तत्र —

माक्षिकं भ्रामरं क्षौद्रं पौतिकं छात्रकं तथा ।
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥

नानापुष्परसाहाराः कपिला नवमक्षिकाः ।
याः स्थूलास्ताभिरुत्पन्नं मधु माक्षिकमुच्यते ॥

ये स्निग्धाञ्जनगोलाभाः पुष्पासवपरायणाः ।
भ्रमरैर्जनितं तैस्तु भ्रामरं मधु भण्यते ॥

पिङ्गला मक्षिकास्सूक्ष्माः क्षुद्रा इति हि ताः स्मृताः ।
ताभिरुत्पादितं यत्तु तत् क्षौद्रं मधु कथ्यते ॥

महत्यो मक्षिकाः पिङ्गाः पूतिका इति कीर्तिताः ।
तज्जातं मधु धीमद्भिः पौतिकं समुदाहृतम् ॥ ४ ॥

छत्राकारं तु पटलं सरघाः पीतपिङ्गलाः ।
यत् कुर्वन्ति तदुत्पन्नं मधु च्छात्रकमीरितम् ॥

---

१. J1. तत्र ; Bh omits this.
२. Bh. वर्ण्यते ।

मक्षिकास्तीक्ष्णतुण्डा याः पीताः षट्पदसन्निभाः
तदुद्भूतं यदर्घ्याहं तदार्घ्यं मधु भण्यते ॥

उद्दालाः कथिताः कीटा भूमेरुद्दालनात् स्मृताः ।
वल्मीकान्तस्तदुत्पन्नमौद्दालकमुदीर्यते ॥

इन्द्रनीलदलाकाराः सूक्ष्माश्चिन्वन्ति माक्षिकाः ।
यद् वृक्षकोटरान्तःस्थं मधु दालमिति स्मृतम् ॥

माक्षिकं तैलवर्णं स्याच्छ्वेतं भ्रामरमुच्यते ।
क्षौद्रं तु कपिलाभासं पौत्तिकं घृतसन्निभम् ॥

आपीतवर्णं छात्रं स्यात् पिङ्गलं आर्घ्यनामकम्
औद्दालं स्वर्णसदृशमापीतं दालमुच्यते ॥

माक्षिकं मधुरं रूक्षं लघु श्वासादिदोषहृत्[2] ।
भ्रामरं पिच्छलं रूक्षं मधुरं मुखजाड्यनुत् ॥

क्षौद्रं तु शीतलं रूक्षं चक्षुष्यं पित्तवातजित् ।
पौत्तिकं मधु रूक्षोष्णमस्रपित्तादिदाहकृत् ॥

पित्त[3]मेहकृमिघ्नं च विद्याच्छात्रं गुणोत्तरम् ।
आर्घ्यं मध्वतिचक्षुष्यं कफपित्तादिदोषहृत् ॥

औद्दालकं तु कुष्ठादिदोषघ्नं सर्वसिद्धिदम् ।
दालं कटु कषायाम्लं मधुरं पित्तदायि च ॥

नवं मधु भवेत् स्थौल्यं नातिश्लेष्महरं परम् ।
देहस्थौल्यापहं ग्राहि पुराणं मधु लेखनम् ॥

पक्वं दोषत्रयघ्नं मधु विविधरुजाजाड्यहिक्कामयादि-
ध्वंसं धत्ते च रुच्यं बलमतिधृतिदं वीर्यवृद्धिं विधत्ते ।

---

१. Bh. omits the portion to the end of मधुप्रकरण and observes in its place मधुवर्णगुणादिलक्षणं सुषेणे द्रष्टव्यः ।

२. J1. दोषजित् ।

३. J1. श्विन्नमेह ।

आमं चेदामगुल्मामयपवनरुजापित्तदाहास्रदोष-
ध्वंसं धत्ते विशोषं जनयति नयति स्वाङ्गवृद्धिं विशेषात् ॥

व्रणशोधनसन्धानव्रणसंरोपणादिषु ।
साधारण्यान्मधु हितं तत्तुल्या मधुशर्करा ॥

उष्णैः सहोष्णकाले वा स्वयमुष्णमथापि वा ।
आर्तं मधु मनुष्याणां विषवत्तापदायकम् ॥

कीटकादियुतमम्लदूषितं यच्च पर्युषितकं मधु स्वतः ।
कण्टकोदरगतं च मेचकं यच्च मेहजनितं च दोषकृत् ॥

दण्डैर्निहत्य यदुपात्तमपास्य दोषान्
तादृग्विधं मधु रसायनयोगयोग्यम् ।
हिक्कागुदाङ्कुरविशोफकफव्रणादि-
कोपापहं भवति दोषदमन्यथा चेत् ॥

यद्गुणं यन्मधु प्रोक्तं तद्गुणा तस्य शर्करा ।
विशेषात्तर्पणी बल्या पुष्ट्या च क्षीणदेहिनाम् ॥

गुरु शीतकषायत्वाद्रौक्ष्याच्चाल्पं हितं मधु ।
न हि कष्टतमं किञ्चित् तदजीर्णाद्यतो वरम् ॥

उपक्रमविरोधित्वात् सद्यो हन्याद्यथा विषम् ।
नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ॥

वृष्ययोगैरतो युक्तं वृष्यतामनुवर्तते ।
स्वीयगुणोदासीनत्वे सति संयोगिगुणोत्कर्षकत्वं योगवाहित्वम् ॥

इति मधुप्रकरणम् ।

———

१. $J_1$. gives under this verse the substance of the same as तमातममधुगुणः

२. $T_2$. Bh. add the explanation :—
विषान्यत्वे सविषपुष्पेभ्योऽपि यतो मधु ।
कुर्वते हि स्वयं यत्र संविषा भ्रमरादयः ॥

## अथ मद्यप्रकरणम् ।

तच्च, गौडीमाध्वीपैष्टीभेदात् त्रिविधम् । तत्र —

स्याद् धातकीरसगुडादिकृता तु गौडी
पुष्पद्रवादिमधुसारमयी च माध्वी ।
पैष्टी पुनर्विविधधान्यविकारजाता
ख्याता मदाधिकतया किल पूर्वपूर्वा ॥

तालादिरसनिर्यासैः सैन्दीं हालां सरां जगुः ।
नानाद्रव्यकदम्बेन द्रव्यं[1] कादम्बरं स्मृतम् ॥

तत्र —

गौडी तीक्ष्णोष्णमधुरा वातहृत् पित्तकारिणी ।
बलकृद् दीपनी पथ्या कान्तिकृत् तर्पणी परा ॥

माध्वी तु मधुरा हृद्या नात्युष्णा पित्तवातकृत् ।
कामलापाण्डुगुल्मार्शःप्रमेहशमनी परा ॥

पैष्टी कट्वम्लतीक्ष्णा स्यान्मधुरा दीपनी परा ।
सैन्दी सिता कषायाम्ला तृष्णासन्तापनाशिनी ॥

कादम्बरी सुमधुरा पित्तघ्नी श्रमहारिणी ।
मदनिर्वाणमदनज्वालापल्लवधृक् सरा ॥

ऐक्षवं तु भवेन्मद्यं शिशिरं च मनोहरम्[2] ।
यावद्धान्यकृतं[3] मद्यं गुरु विष्टम्भदायकम् ॥

शर्कराधातकीतोये कृतं शीतं मनोहरम् ।
शार्करं कथ्यते मद्यं वृष्यं दीपनमोहनम्[4] ॥

---

१. J1. मद्यं कादम्बरं ।

२. J1. मदोत्कटम् । T2. adds the explanation मनोहरं मदोत्कटम् ।

३. T2. has also the alternative reading यवधान्यकृतम् ।

४. T2. has also the alternative reading दीपनपाचनम् ।

मद्यं नवं सर्वविकारहेतु सर्वं च वातादिकदोषदायि ।
जीर्णं तु सर्वं सकलामयघ्नं वृष्यं च सन्दीपनमुक्तमेतत् ॥

सामान्यतः ।

दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम् ।
सुस्वादु तिक्तकटुकमम्लपाकरसं सरम् ॥

सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ।
नष्टनिद्रातिनिद्रेभ्यो हितं पित्तास्रदूषणम् ॥

कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम् ।
वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ॥

उक्तं च वैद्येन[1] —

मद्यं न पेयं वा पेयं स्वल्पं सुबहुवारि वा ।
अन्यथा शोथशैथिल्यदाहमोहान् करोति (च) ॥
द्राक्षेक्षवः सखर्जूराः[2] शालिपिष्टं यवस्य वा ।

पञ्च मद्याकराः श्रेष्ठाः द्राक्षा तेषां विशिष्यते ।

अन्येऽपि मद्यभेदास्तत्प्रकाराश्च सर्वानुपयोगात् ग्रन्थगौरवभयाच्चेह नोक्ताः । यतउक्तम् —

मद्यप्रयोगं कुर्वीत शूद्रादिषु महार्तिषु ॥

इति मद्यप्रकरणम् ।

---

## अथ मांसप्रकरणम् ।

तत्त्रिविधं; भूचरखेचराप्चरभेदात् । तेषां क्रमेण गुणाः —

मांसं खड्गमृगोत्थं तु बलकृद् बृंहणं गुरु ।
गवयस्यामिषं बल्यं रुच्यं वृष्यं च बृंहणम् ॥

---

१. T1; T2. omit उक्तं च वैद्येन ।
२. T1. has also the alternative reading द्राक्षेक्षुमधुखर्जूराः ।

ईषल्लघु स्यादपि बृंहणं च मांसं बलिष्ठं वनमाहिषस्य ।
स्निग्धं निद्राकरं पित्तहारि ग्राम्यस्य चामिषम् ।

माहिषस्येति सम्बन्धः ।

करोः[1] कण्ठ्यं गुरु स्निग्धं वातलं श्लेष्मकारकम् ।
बहुपुष्टिप्रदं गाजमामिषं वह्निमान्द्यदम्[2] ॥

अश्वमांसं[3] भवेदुष्णं वातघ्नं बलदं लघु ।
पित्तदाहप्रदं नृणां तदेतच्चातिसेवनात् ॥

औष्ट्रं मांसं तु शिशिरं त्रिदोषशमनं लघु ।
बलपुष्टिप्रदं रुच्यं मधुरं वीर्यवर्धनम् ॥

गर्दभप्रभवं मांसं किञ्चिद्गुरु बलप्रदम् ।
रुच्यं तु वनजं शैत्यमतिवीर्यबलप्रदम् ॥

वनगर्दभस्येत्यर्थः ।

मृगस्य मांसं लघु शीतवृष्यं त्रिदोषहृत् षड्रसदं च रुच्यम् ।
कुरङ्गमांसं मधुरं च वह्नत् कफापहं पित्तहरं च मारुतम् ॥

मृगस्ताम्रमृगः[4] । मारुतं मरुत्प्रकोपकारि । कुरङ्गश्चतुरगतिः ।

त्रिदोषहारि[5] चैणं स्याल्लघु वृष्यं सुशीतलम् ॥

कृष्णपृष्ठः[6] ।

अन्यत्र —

सारङ्गं पिशितं स्निग्धं मधुरं लघु वृष्यदम् ।

सारङ्गः[7] कृष्णपृष्ठ एव ।

---

१. J1. omits स्निग्ध ... भवेदुष्ण in the next verse.
२. T1; T2; P1; P2. add गाजं गजभवम् ।
३. Bh. omits this verse.
४. J1. हरिणस्ताम्रमृगः; Bh. मृगाश्चोष्ट्रमृगाः ।
५. J1; Bh. त्रिदोषहारि चैणस्य लघु ।
६. T1. कृष्णपृष्ठः एणः ।
७. J1. omits सारङ्गः ... ... ... बलप्रदम् ।

चितलप्रभवं मांसं लघु हृद्यं बलप्रदम् ॥

चित्तलस्य।

वराहमांसं गुरु वातहारि
वृष्यं बलस्वेदकरं वनोत्थम्।
तस्माद् गुरु ग्रामवराहमांसं
तनोति मेदोबलवीर्यवृद्धिम् ॥

छागमांसं गुरु स्निग्धं नातिशीतं रुचिप्रदम्।
निर्दोषं वातपित्तघ्नं मधुरं बलपुष्टिदम् ॥

छागपोतभवं मांसं लघु शीतं प्रमेहजित्।
ईषल्लघु बलं दत्ते तदेव तृणचारिणः ॥

भारङ्गस्यापि मांसं तु गुरु स्निग्धं कफप्रदम्।
बल्यं वृष्यकरं पुष्टिप्रदं वातकरं परम् ॥

भारसिङ्ग।

आविकं मधुरं मांसं किञ्चिद्गुरु बलप्रदम्।
बृंहणं कफकृद् वृष्यं परं विष्टम्भि शीतलम् ॥
गोधामांसं तु वातघ्नं श्वासकासहरं च तत्।

घोरफड।

शशमांसं त्रिदोषघ्नं दीपनं श्वासकासनुत्।
पिच्छलं नाकुलं मांसं वातकृच्छ्लेष्मपित्तकृत् ॥

मुंगुस।

आरण्यकुक्कुटक्रव्यं हृद्यं श्लेष्महरं लघु।
ग्राम्यस्तु श्लेष्मलो गुरुः।
हारीतं पललं स्वादु कफपित्तास्रदोषजित्।
वर्धनं वीर्यबलयोस्तद्वदेव कपोतजम् ॥

---

१. Bh. adds :—
कुक्कुटो बृंहणः स्निग्धो वीर्योष्णोऽनिलजिद् गुरुः।
चक्षुष्यः शुक्रकफकृद्वन्यो हृद्यः कफान्तकृत् ॥
पानीयकुक्कुटः स्निग्धो बृंहणः श्लेष्मलो गुरुः।

१. $T_2$. adds the explanation हारीतः पक्षिविशेषः। फाक्तेति लोके। कपोतः होला। bh. has the name होला only.

पारावतपलं स्निग्धमधुरं गुरु शीतलम् ।
पित्तास्रदाहनुद् बल्यं वीर्यवृद्धिकरं परम् ॥

रुच्यं तित्तिरिजं मांसं लघु वीर्यबलप्रदम् ।
कषायमधुरं शीतं त्रिदोषशमनं परम् ॥

तद्वच्च लावकं मांसं पथ्यं ग्राहि बलप्रदम् ।
चटकस्यास्रजिच्छीतं लघु वृष्यं बलप्रदम् ॥

तद्वच्चारण्यचटकक्रव्यं लघु च पथ्यकम् ।
रुच्यं कापिञ्जलं क्रव्यं शीतलं बृंहणं गुरु ॥

वृष्यं चकोरजं मांसं बल्यं पुष्टिकरं परम् ।
चक्रवाकभवं क्रव्यं लघु स्निग्धं बलप्रदम् ॥

वह्निकृत् सर्वशूलघ्नं ग्रहण्यर्शोविकारजित् ।
सारसस्य तथा मांसं मधुराम्लकषायकम् ॥

मोहातीसारपित्तघ्नं ग्रहण्यर्शोरुजापहम् ।
मांसं शीतं वृष्यं स्निग्धं गुरु जलपक्षिणां कथितम् ।
तेष्वपि च हंसमांसं वृष्यतमं तिमिरहरं च ॥

अन्ये बकबलाकाद्याः गुरवः प्राणिभक्षणात् ।
स्निग्धातिगुरवो मत्स्या वातघ्ना रक्तपित्तदाः ।
तत्र कांश्चिदपि ब्रूमो विशेषगुणलक्षणात् ॥

रोहितो गर्गरो भीरुर्वलको वर्वरस्तथा ।
छागलो रक्तमत्स्योऽथ महिषश्च बिलाह्वयः ॥

---

१. T2. takes off मांसं and continues. पथ्यं । the next verse.

२. T2. gives the name after this चटकः लिवणी । चिमण्यां चे ।

३. T2. गुर्वम्बुपक्षिणाम् ।

४. Bh. omits स्निग्धाति ...... वर्वरस्तथा ।

चारूषस्त्वलमोपा च ज्ञेया वर्णा वशादयः ।

तत्र ।

कृष्णः शल्की श्वेतकुक्षिस्तु मत्स्यो
यः श्रेष्ठोऽसौ रोहितो वृत्तवक्त्रः ।
कोष्णं बल्यं रोहितस्यापि मांसं
वातं हन्ति स्निग्धमृघ्नाति वीर्यम् ।

रोहितमत्स्य ।

यः पीतवर्णोऽपि च पिच्छिलाङ्गः पृष्ठे च रेखाबहुलः स शल्कः ।
स गर्गरो गर्गरनादवश्यो जडश्च शीतः कफवातदायी ॥

गागरु ।

पृष्ठे पक्षौ द्वौ गले पुच्छके चेत् सर्पाभः स्यात् पुष्करो वृत्ततुण्डः ।
ज्ञेयः शल्की मत्स्यको भीरुरुक्तः स्निग्धो वृष्यो दुर्जरो वातकारी ॥

अहीर ।

नातिस्थूलो वृत्तवक्त्रोऽपि चास्ये धत्ते दन्तान् श्मश्रुलो दीर्घकायः ।
त्रिःसन्ध्यायां रात्रिशेषे त्रिवर्णः प्रोक्तो बालः पथ्यबल्यः सुवृष्यः ॥

वालांबु ।

पृष्ठे कुक्षौ कण्टकी दीर्घतुण्डः सर्पाभो यः सोऽप्ययं बर्बराख्यः ।
वाताटोपं सोऽपि दत्तेऽन्त्रजाड्यं स्निग्धो बल्यो दुर्जरो वीर्यकारी ।

बाधीरु ।

श्वेतं सुकायं समदीर्घवृत्तं निश्शल्ककं छागलकं वदन्ति ।
द्विकण्टकोऽसौ खलु पृष्ठवंशे कण्ठ्यस्सुपथ्यो रुचिदश्च बल्यः ॥

सगलु ।

---

१. $J_1$. कर्णावशादयः, Bh. कर्णा च शादयः T2. gives also the varient reading वर्णा वशाभिधः ।

२. $T_2$. वृत्तचक्रः

३. Bh. has an omission वातकारी...... to दुर्जरो, probably due to the scribe.

४. Bh पथ्यः । सलगू मासे ।

यो रक्ताङ्गो नातिदीर्घो न चाल्पो
नातिस्थूलो रक्तमत्स्यः स उक्तः ।
शीतो रुच्यः पुष्टिकृद् दीपनोऽसौ
नाशं दत्ते किञ्च दोषत्रयस्य ॥

तांबड्ड ।

यः कृष्णो दीर्घकायः स्यात् स्थूलशल्की बलान्वितः ।
मत्स्यो माहिषनामासौ दीपनो बलवीर्यदः ॥

भैंसाळ ।

शुक्लाङ्गस्ताम्रपक्षो यः स्वल्पाङ्गश्च बिलाह्वयः ।
स रुच्यो मधुरो बल्यो गुणाढ्यो वीर्यपुष्टिदः ॥

आबिला ।

यः स्थूलाङ्गो माहिषाकारको यस्तालुस्थाने क्षीरजाभां दधाति ।
शल्कं स्थूलं यश्च चारूपकोऽसौ दत्ते वीर्यं दीपनो वृष्यदायी ॥

पाउस ।

वितस्तिमानः श्वेताङ्गः सूक्ष्मशल्कः स दीपनः ।
अळमोसाह्वयो मत्स्यो बलवीर्याङ्गपुष्टिदः ॥

आलमास ।

विवृत्ताङ्गोऽल्पैकृष्णाङ्गः शल्की वर्णवशाभिधः ।
दीपनः पाचनः पथ्यो वृष्योऽसौ बलपुष्टिदः ॥

कानवसा ।

इति द्वादशभेदानां गुणा रूपं च वर्णितम् ।

वशा—

निश्शल्का निन्दिता मत्स्याः सर्वे शल्कयुता हिताः ॥

---

१. Bh. ताम्बुदमासे ।
२. T1, T2. यस्य ।
३. Bh. ऽल्पपुष्टाङ्गः ।

बलपुष्टिकरा वीर्यवपुःस्थैर्यविवर्धनाः ॥

अथ स्थानविशेषेण गुणाः ।

क्षारांबुमत्स्या गुरवो विदाहिनो
विष्टम्भदास्ते लवणार्णवादिजाः ।

ह्रदकुल्याजलनिर्झरतडागवापीजलेषु ये मत्स्याः ।
तेऽतिजडा नादेया[1] यथोत्तरं लघुतरास्तु नादेयाः[2] ॥

सुषेणः —

जडास्तटाकसम्भूताः स्निग्धाः स्वादुरसाः स्मृताः ॥

कौपा वृष्याः श्लेष्मलाः संप्रदिष्टाः गुल्माष्ठीलानाहकुष्ठप्रदाः स्युः ।
तडागवन्निर्झरजाश्च मेध्याश्चक्षुस्स्थिरायुष्यबलप्रदाश्च ।

महाह्रदेषु बलिनः स्वाल्पाम्भस्यबला मताः ।

सामुद्रो गुरुरुष्णरूक्षमधुरः स्याच्छ्लेष्मलो वातहा
स्यात्स्नेहाग्निविवर्धनो नवकरश्चाध्मानविष्टम्भकृत् ।
पित्तोद्रेककफात्ययेषु विहितो मत्स्योऽतिहृद्यस्सदा
विष्टम्भं जनयेच्च शीतपवनं व्यापादयत्यप्रवैः[3] ॥

तथा —

ऋतुप्रभौ निर्झरेषु प्रजाता मत्स्या हिता ग्रीष्मकाले तु चौण्ड्याः ।
तडागजाः प्रावृषि सर्व एव स्निग्धा बलिष्ठाश्च सृजन्ति दोषान् ॥

शरदृतौ निर्झरजाश्च कूपजाता हिमर्तौ शिशिरे च शस्ताः ॥

रसरक्तादिधातूनां गुरु स्यादुत्तरोत्तरम् ।
मेढ्रं कटियकृन्मांसं वार्षणं चातिमात्रतः ॥

---

१. $T_1$. न ग्राह्याः ।

२. $T_2$. has the explanation नादेया न ग्राह्याः । नादेया नद्युत्पन्नाः ।

३. $T_2$. adds the explanation अप्रत परिणामे ।

पक्कं मांसं हितं सर्वं बलवीर्यविवर्धनम् ।
भृष्टमांसं विदाहि स्यादस्रवातादिदोषकृत् ॥[1]

पूर्वार्धं पुरुषस्य चेद् गुरुतरं पश्चार्धभागः स्त्रियाः
स्त्री गुर्वी किल गुर्विणी यदि तथा योषिच्च तुल्या लघुः ।
पक्षी चेत् पुरुषो लघुः स्फिजशिरःस्कन्धांसपृष्ठे क्रमा-
न्मांसं यच्च कटिस्थितं तदखिलं गुर्वेव सर्वात्मनाम् ॥

इति[2] मांसप्रकरणम् ।

---

## अथ जलप्रकरणम् ।

तत्र जलसामान्यगुणाः —

पानीयं मधुरं[3] सितं रुचिकरं तृष्णाविशोषापहं
मोहभ्रान्तिनिवारणं च कुरुते भुक्तान्नपक्तिं सदा ।
निद्रालस्यनिवारणं विषहरं स्रोतस्सुसन्तर्पणं
पीतं धीबलवीर्यपुष्टिजननं चाष्टाङ्गपुष्टिप्रदम् ॥

---

१. Bh. adds before this ।

मत्स्यगर्भः परं वृष्यः स्निग्धः स्थौल्यकरो गुरुः ।
बृंहणो बलदः स्निग्धस्तद्वन्मकरमादिशेत् ॥
मकरसुसर इति भाषायाम् ।
कणपो गूढपात् कूर्मः कमठो दृढपृष्ठकः ।
कच्छपो बलदस्स्निग्धो वातजित् पुंस्त्वकारकः ॥
कांसवाचे
मण्डूको बृंहणो वृष्यश्शीतलोऽसृग्गदापहः ॥
बेडुकांचे
सर्पाणां स्नेहनं मांसं चक्षुष्यं बृंहणं गुरु ।
दूषीविषक्रिमिहरं मेधाग्निबलवर्धनम् ॥
सर्पमांस ॥

२. $T_2$, $P_1$, $P_2$. add तथा गुर्विणी before इति मांसप्रकरणम् ॥

३. $J_1$ मधुरं हिमं च रुचिदं ॥ Bh. मधुरं हितं रुचिकरम् ॥

अपि च¹ —

पानीयं श्रमनाशनं क्लमहरं मूर्च्छापिपासापहं
तन्द्राच्छर्दिविनाशनं बलकरं निद्राहरं तर्पणम् ।
हृद्यं गुप्तरसं ह्यजीर्णशमकं नित्यं हितं शीतलं
लघ्वच्छं रसकारणं निगदितं पीयूषवज्जीवनम् ॥

अथ पानीयभेदाः —

पानीयं मुनिभिः प्रोक्तं दिव्यं भौममिति द्विधा ।

तत्र —

दिव्यं चतुर्विधं प्रोक्तं धाराजं करकाभवम् ।
तौषारं च तथा हैमं तेषु धारं गुणाधिकम् ॥

भौममम्भो निगदितं प्रथमं त्रिविधं बुधैः ।
जाङ्गलं परमानूपं ततः साधारणं क्रमात् ॥

तदपि नादेयादिभेदेन बहुविधं वक्ष्यते । धाराजं यथा —

धाराभिः पतितं तोयं गृहीतं स्फीतवाससा ।
शिलायां वा सुधायां वा धौतायां पतितं च यत् ॥
सौवर्णे राजते ताम्रे स्फाटिके काचनिर्मिते ।
भाजने मृण्मये वापि स्थापितं धारमुच्यते ॥

धारं नीरं त्रिदोषघ्नमनिर्देश्यरसं लघु ।
सौम्यं रसायनं बल्यं तर्पणं ह्लादि जीवनम् ॥
पाचनं मतिकृन्मूर्च्छातन्द्रादाहश्रमक्लमान् ।
तृष्णां हरति तत्पथ्यं विशेषात् प्रावृषि स्मृतम् ॥

धाराजमपि द्विविधम् । गाङ्गं सामुद्रं च । तत्र गाङ्गं यथा —

आकाशगङ्गासम्बन्धि जलमादाय दिग्गजाः ।
मेघैरन्तरिता वृष्टिं कुर्वन्तीति वचः सताम् ॥
गाङ्गमाश्वयुजे मासि प्रायो वर्षति वारिदः ।

---

१. Bh. omits अपि च ... ... ...तथा line 16 page 180.

तत्परीक्षा च —

स्थापितं हैमने पात्रे राजते मृण्मयेऽपि वा ।
शाल्यन्नं येन संसिक्तं भवेदक्लेदवर्णवत् ॥

तद्गाङ्गं सर्वदोषघ्नं ज्ञेयं सामुद्रमन्यथा ।
तत्तु सक्षारलवणं शुक्रदृष्टिबलापहम् ॥

विस्रं[2] च दोषलं तीक्ष्णं सर्वकर्मसु गर्हितम् ।
सामुद्रं त्वाश्विने मासि गुणैर्गाङ्गवदादिशेत् ॥

यतोऽगस्त्यस्य दिव्यर्षेरुदयात्सकलं जलम् ।
निर्मलं निर्विषं स्वादु शुक्रलं स्याददोषलम् ॥

उक्तं च —

फूत्कारविषवातेन नागानां व्योमचारिणाम् ।
वर्षासु सविषं तोयं दिव्यमप्याश्विनं विना ॥ इति ॥

---

अथानार्तवस्य गुणाः —

अनार्तवं प्रमुञ्चन्ति वारि वारिधरास्तु यत् ।
तत् त्रिदोषाय सर्वेषां देहिनां परिकीर्तितम् ॥

अन्यत्र तु —

शरत्पयोदनिर्मुक्तं महावैडूर्यसन्निभम् ।
सर्वदोषहरं स्वादु दिव्यमित्युच्यते जलम् ॥

प्रावृड्जलदनिर्मुक्तमव्यक्तस्वादुलक्षणम् ।
वारि स्फाटिकसङ्काशमान्तरिक्षमिति स्मृतम् ॥

इत्युक्तम् । करकाभवं[3] यथा —

दिव्यं वार्यग्निसंयोगात् संहताः खात्पतन्ति याः ।
पाषाणखण्डवच्चापः ताः कारक्योऽमृतोपमाः ॥

---

१ $J_1$. शाल्मलम् ।

२. $J_1$. वृष्यं च ।

३. $J_1$. करकाजं यथा — दिव्यं वार्यग्नि ।

करकाजं जलं रूक्षं विशदं गुरु च स्थिरम् ।
दारुणं शीतलं सान्द्रं पित्तहृत् कफवातकृत् ॥

तौषारं यथा —

अपि नद्याः समुद्रान्तर्वह्निरापश्च तद्भवाः ।
धूमावयवनिर्मुक्तास्तुषाराख्यास्तु ताः स्मृताः ॥
अपथ्याः प्राणिनां प्रायो भूरुहाणां तु ता हिताः ।
तुषाराम्बु हिमं रूक्षं स्याद्वातलमपित्तलम् ॥
कफोरुस्तम्भकण्ठाग्निमेदोगण्डादिरोगनुत् ।

हैमं यथा —

हिमवच्छिखरादिभ्यो द्रवीभूयाभिवर्षति ।
यत्तदेव हिमं हैमं जलमाहुर्मनीषिणः ॥
हिमाम्बु शीतं पित्तघ्नं गुरु वातविवर्धनम् ॥

अन्यत्र तु —

और्वानलधूमेरितमम्बु समुद्रस्य यद् घनीभूतम् ।
पवनानीतमुदीच्यां तद्धिममिति कथ्यते मुनिभिः ॥ इति ।

हिमं तु शीतलं रूक्षं दारुणं सूक्ष्ममित्यपि ।
न तद् दूषयते वातं न च पित्तं न वा कफम् ॥

इति दिव्यम् ।

---

अथ भौमम् । तत्र जाङ्गलं यथा —

अल्पोदकोऽल्पवृक्षश्च पित्तरक्तामयान्वितः ।
ज्ञातव्यो जाङ्गलो देशस्तत्रत्यं जाङ्गलं जलम् ॥
जाङ्गलं सलिलं रूक्षं लवणं लघु तत्तनु ।
वह्निकृत्कफकृत्पथ्यं विकारान् कुरुते बहून् ॥

आनूपं यथा —

बह्वम्बुर्बहुवृक्षश्च वातश्लेष्मामयान्वितः ।
देशोऽनूप इति ख्यात आनूपं तद्भवं जलम् ॥

आनूपं वार्यभिष्यन्दि स्वादु स्निग्धं घनं गुरु ।
वह्निहृत्कफकृन्निन्द्यं विकारान् कुरुते बहून् ॥

साधारणं यथा —

मिश्रचिह्नस्तु यो देशः स हि साधारणः स्मृतः ।
तस्मिन् देशे यदुदकं तत्तु साधारणं स्मृतम् ॥

साधारणं तु मधुरं दीपनं शीतकं लघु ।
तर्पणं रोचनं तृष्णादाहदोषत्रयप्रणुत् ॥

अन्यत्र तु —

जाङ्गलं सलिलं स्वादु त्रिदोषघ्नं रुचिप्रदम् ।
पथ्यं चायुर्बलं वीर्यपुष्टिदं कान्तिकृत्परम् ॥

आनूपं सलिलं स्वादु स्निग्धं पित्तहरं गुरु ।
तनोति पामाकण्डूतिकफवातज्वरामयान् ॥

साधारणजलं रुच्यं दीपनं पाचनं लघु ।
श्रमतृष्णापहं वातकफमेहप्रपुष्टिदम्

इति ।

तथा —

जातं ताम्रमृदस्तदेव सलिलं वातादिदोषप्रदं
देशाज्जाड्यकरं च दुर्जरतरं दोषावहं धूसरात् ।
वातघ्नं तु शिलाशिरोत्थममलं पथ्यं लघु स्वादु च
श्रेष्ठं स्यादमृतं त्रिदोषशमनं सेव्यं सदा तत्पयः ॥

अथ नादेयम् —

नद्या नदस्य वा नीरं नादेयमिति कीर्तितम् ।

तत्र भागीरथ्या यथा —

शीतं स्वादु स्वच्छमत्यन्तरुच्यं पथ्यं पाक्यं पाचनं पापहारि ।
तृष्णामोहध्वंसनं दीपनं च प्रज्ञां दत्ते वारि भागीरथीयम् ॥

[1]तथा —

स्वादु पाकरसं शीतं त्रिदोषशमनं लघु ।
पवित्रमतिपथ्यं च गाङ्गं वारि मनोहरम् ॥

यमुनाया यथा —

[2]पित्तदाहशमनं श्रमापहं स्वादु वातजननं च पावनम् ।
वह्निदीपनकरं च रोचनं यामुनं जलमिदं बलप्रदम् ॥

नर्मदाया यथा —

सलिलं लघु शीतलं सुपथ्यं कुरुते पित्तकफप्रकोपनं च ।
सकलामयमर्दनं च रुच्यं मधुरं मेकलकन्यकासमुत्थम् ॥

सरस्वत्या यथा —

सरस्वतीजलं स्वादु पूतं सर्वरुजापहम् ।
रुच्यं दीपनकृत्पथ्यं देहकान्तिकरं लघु ॥

[3]चन्द्रभागामधुमत्योर्यथा —

चान्द्रभागसलिलं सुशीतलं दाहपित्तशमनं च वातदम् ।
चान्द्रभागगुणसाम्यदं जलं यच्च माधुमतमग्निदीपनम् ॥

चन्द्रभागा मधुमती च काश्मीरे प्रसिद्धे ।

[4]शतद्रुविपाशासिन्धूनां यथा —

शतद्रुर्विपाशा च सिन्धुस्त्रयाणां सुशीतं लघु स्वादु सर्वामयघ्नम् ।
जलं निर्मलं दीपनं पाचनं च प्रदत्ते बलं बुद्धिमेधायुषां च ॥

---

१. J1 omits तथा … यमुनाया यथा । Bh. omits तथा…मनोहरम् ।

२. T1. T2. give a variant reading also पित्तदाहवमिरुक्श्रमापहम् ।

३. J1. omits the introduction to the verse. Bh. चन्द्रभागामधूमती काश्मीरे एव । तद्गुणाः and omits चन्द्रभागमधूमती च काश्मीरे प्रसिद्धे occuring after the next verse.

४. J1. T1. omit the introduction to the verse.

शोणभद्रस्य[1] यथा —

शोणस्यापि जलं परं रुचिकरं सन्तापशोषापहं
पथ्यं वह्निकरं तथा च बलदं क्षीणाङ्गपुष्टिप्रदम् ।

तापीवेत्रवत्योर्यथा[2] —

तापीवेत्रवतीजलं सुमधुरं कान्तिप्रदं पुष्टिदं
वृष्यं दीपनपाचनं बलकरं पाने प्रशस्तं नृणाम् ॥

पयोष्ण्या[3] यथा —

पयोष्णीसलिलं रुच्यं पवित्रं पापनाशनम् ।
सर्वामयहरं सौख्यबलकान्तिप्रदं लघु ॥

वितस्तायाः[4] —

वितस्तासलिलं स्वादु त्रिदोषशमनं लघु ।
प्रज्ञापुष्टिप्रदं पथ्यं तापजाड्यहरं परम् ॥

वितस्ता काश्मीरे ॥ सरय्वा[5] यथा —

सरयूसलिलं स्वादु बलपुष्टिप्रदायकम् ।

गोमत्या[6] यथा —

गोमतीसलिलं स्वादु वश्यं पित्तकरं गुरु ।

गोमती पश्चिमे प्रसिद्धा । गोदावर्या यथा —

पित्तातिरक्तार्तिसमीरहारि पथ्यं परं दीपनपापहारि ।
कुष्ठादिनानामयदोषहारि गोदावरीवारि तृषापहारि ॥

तथा[7] —

कण्डूकुष्ठप्रशमनं वह्निसन्दीपनं परम् ।
पावनं वातपित्तघ्नं वारि गोदावरीभवम् ॥

---

१. J1. नदीत्रयस्य गुणाः introducing this and the next verse Bh. omits this and the verse following.

२, ३, ४, ५, ६. J1. omits the introduction.

७. J1; Bh. omit this and the verse.

[1]कृष्णाया यथा—

कार्ष्ण्यं जाड्यकरं स्वादु पूतं पित्तास्रकोपनम् ।

[2]कृष्णवेण्या यथा—

कृष्णवेण्या जलं स्वच्छं रुच्यं दीपनपाचनम् ।

[3]मलप्रहाराभीमरथीघटप्रहाराणां —

मलापहा भीमरथी च घट्टगा कार्ष्ण्येन सामान्यगुणाः प्रदिष्टाः ।
मलापहाघट्टगयोस्तथापि पथ्यं लघु स्वादु सुकान्तिदायि ॥

[4]तुङ्गभद्राया यथा —

तुङ्गभद्राजलं स्निग्धं निर्मलं स्वादुदं गुरु ।
कण्डूपित्तास्रदं प्रायः सात्म्ये शैत्यकरं परम् ॥

[5]कावेर्या यथा —

कावेरीसलिलं स्वादु श्रमघ्नं लघु दीपनम् ।
दद्रुकुष्ठादिदोषघ्नं मेधाबुद्धिरुचिप्रदम् ॥

इति नदीविशेषगुणाः ।

नदीनामच्छमन्यासां देशदोषादिभेदतः ।
तत्तद्गुणान्वितं वारि ज्ञातव्यं कृतबुद्धिभिः ॥

[6]यथा —

पूर्वदेशोद्भवा नद्यः सर्वा वातकफप्रदाः ।
पश्चिमाः पित्तलाः सर्वाः कफवातविनाशनाः ॥
इति संक्षेपतः प्रोक्ता नद्यः क्षुद्रास्तु सम्प्रति ।

वाग्भटः —

पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः ।
पथ्यास्समस्तास्ता नद्यो विपरीतास्ततोऽन्यथा ॥
उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ।
हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः ॥

---

१; २; ३; ४; ५. J1. omits the introduction to the verses.

६. Bh. omits from this to नद्यः प्रावाषिकास्तु etc. in l. 7. p. 184.

क्रिमिश्लीपदहृत्कण्ठशिरोरोगान् प्रकुर्वते ।
प्राच्यावन्त्यपरान्तस्था दुर्नामानि महेन्द्रजाः ॥
उदरश्लीपदातङ्कान् सह्यविन्ध्योद्भवाः पुनः ।
कुष्ठपाण्डुशिरोरोगान् दोषघ्न्यः पारियात्रजाः ॥
बलपौरुषकारिण्यः सागराम्भस्त्रिदोषकृत् ॥

तथा—

नद्यः प्रावृषिजास्तु पीनसकफश्वासार्तिकासप्रदाः
पथ्या वातकफापहाः शरदिजा हेमन्तजा बुद्धिदाः ।
सन्तापं शमयन्ति शं विदधते शैशर्यवासन्तजा-
स्तृष्णादाहवमिश्रमार्तिशमना ग्रीष्मे यथास्वं गुणाः ॥

अथौद्भिदं —

विदार्य भूमिं निम्नां यन्महत्या धारया स्रवेत् ।
तत् तु भौमौद्भिदं नाम वदन्तीह महर्षयः ॥
औद्भिदं वारि पित्तघ्नमविदाह्यतिशीतलम् ।
प्रीणनं मधुरं बल्यमीषद्वातकरं लघु ॥

अथ नैर्झरम् —

शैलसानुस्रवद्वारिप्रवाहो निर्झरो झरः ।
स तु प्रस्रवणश्चापि तत्रत्यं नैर्झरं जलम् ॥
नैर्झरं रुचिकृत्क्षीरं कफघ्नं दीपनं लघु ।
मधुरं कटुपाकं च वातलं स्यादपित्तकम् ॥

अथ सारसम् —

नद्याश्शैलवराच्चाम्भो यत्र संस्तुत्य तिष्ठति ।
यत्सरोजदलच्छन्नं तदम्भस्सारसं स्मृतम् ॥

---

१. $J_1$ स्त्रिदोषजित् ।

२. Bh. Skips over the portion अथौद्भिदं .............. to हंसोदकम् (P. 186. l. 15) with the observation तडागजलादिगुणाः सुषेणे द्रष्टव्याः ।

सारसं सलिलं बल्यं तृष्णाघ्नं मधुरं लघु।
रोचनं तुवरं रूक्षं बद्धमूत्रमलं सितम्॥

अथ ताटाकम्—

प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः।
जलाशयस्तटाकः स्यात् ताटाकं तज्जलं स्मृतम्॥

ताटाकमुदकं स्वादु कषायं कटुपाकि च।
वातलं बद्धविण्मूत्रमसृक्पित्तकफापहम्॥

अथ वाप्यम्—

पाषाणैरिष्टकाभिर्वा बद्धा कूपाद् बृहत्तरा।
ससोपाना भवेद् वापी तज्जलं वाप्यमुच्यते॥

वाप्यं वारि यदि क्षारं पित्तकृत् कफवातहृत्॥
तदेव मिष्टं कफदं[1] वातपित्तहरं भवेत्॥

अथ कौपम्—

भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृतिः।
बद्धोऽबद्धः स कूपः स्यात् तदम्भः कौपमुच्यते॥

कौपं पयो यदि स्वादु त्रिदोषघ्नं हितं लघु।
तत् क्षारं कफवातघ्नं दीपनं कफकृत्परम्॥

अथ चौड्यम्—

शिलाकीर्णं स्वयं श्वभ्रं नीलाञ्जनसमोदकम्।
लतावितानसञ्छन्नं चौड्यमित्यभिधीयते॥

तत्रत्यमुदकं चौड्यं मुनिभिस्समुदाहृतम्।
चौड्यं वह्निकरं नीरं रूक्षं कफकरं लघु॥
मधुरं पित्तनुद् रुच्यं पाचनं विशदं स्मृतम्।

अथ पाल्वलम्—

पाल्वलं वार्यभिष्यन्दि गुरु स्वादु त्रिदोषकृत्।

---

१. $J_1$ कफकृत्।

अथ विकिरम् —

नद्यादिनिकटे भूमिर्या भवेद्वालुकामयी ।
उद्राव्यते ततो यत्तु तज्जलं विकिरं विदुः ॥
विकिरं शीतलं स्वच्छं निर्दोषं लघु च स्मृतम् ।
तुवरं स्वादु पित्तघ्नं क्षारं तत् पित्तलं मनाक् ॥

अथ कैदारम् —

केदारं क्षेत्रमुद्दिष्टं कैदारं तज्जलं स्मृतम् ।
कैदारं वार्यभिष्यन्दि मधुरं गुरु दोषकृत् ॥

अथ ह्रादम् —

ह्रादं तु वह्निजननं मधुरं कफवातहारि पथ्यं च ।
नादेयं नवमृण्मयेषु निहितं सन्तप्तमर्कांशुभि-
र्यामिन्यां च निविष्टमिन्दुकिरणैर्मन्दानिलान्दोलितम् ।
एलाद्यैः परिवासितं श्रमहरं पित्तोष्णदाहे विषे
मूर्च्छारक्तमदात्ययेषु च हितं शंसन्ति हंसोदकम् ॥

इति हंसोदकम् ॥

कौपं प्रस्रवणं वसन्तसमये ग्रीष्मे तु चौञ्चं भवेत्
काले प्रावृषि नाभसं च सगुणं स्यादौद्भिदं वा पयः ।
नीहारे सरसीतटागविषयं सर्वं शरत्सङ्गमे
सेव्यं सूर्यसितांशुरश्मिपवनव्याधूतदोषं पयः ॥

वृद्धसुश्रुतः —

पौषे वारि सरोजातं माघे तत्तु तटाकजम् ।
फाल्गुने कूपसम्भूतं चैत्रे चौञ्च्यं हितं मतम् ॥
वैशाखे नैर्झरं नीरं ज्येष्ठे शस्तं तथौद्भिदम् ।
आषाढे शस्यते कौपं श्रावणे दिव्यमेव च ॥
भाद्रे च कूपसम्भूतमाश्विने चौञ्च्यमेव च ।
कार्तिके मार्गशीर्षे च जलमात्रं प्रशस्यते ॥

---

१. T1. J1. Bh omit this verse.

२. J1; Bh, भाद्रे कौपं पयश्शस्तम् ।

भौमानामम्भसां प्रायो ग्रहणं प्रातरिष्यते ।
शीतत्वं निर्मलत्वं च यतस्तेषां महान् गुणः ॥

अथ नारिकेलोदकगुणाः ।

नारिकेरोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।
तृष्णापित्तानिलहरं दीपनं बस्तिशोधनम् ॥

श्रमघ्नं बृंहणं बल्यं सूतिकानां हितं परम्[1] ।

इति सामान्यनारिकेरवारिगुणाः।

अथ पुराणस्य—

नारिकेरस्य यत्तोयं पुराणं पित्तवर्धनम् ।

नवस्य[2] —

तस्यैव तरुणं तोयं पित्तघ्नं क्रिमिनाशनम् ॥

बालस्य —

बालस्य नारिकेरस्य कटु पाके हिमं जलम् ।
ईषत्कषायमधुरं पक्वस्योष्णं सरं गुरु ॥

स्निग्धादयो गुणास्त्वन्ये समाः स्युर्बालपक्वयोः ।

अन्यत्र —

नारिकेरसलिलं लघु बाल्ये शीतलं च मधुरं दरपाके ।
पित्तपीनसतृषास्रविदाहश्रान्तिशोषशमनं सुखदायि ॥

पक्वमेतदपि किञ्चिदिहोक्तं पित्तकारि रुचिदं मधुरं च ।
दीपनं बलकरं गुरु वृष्यं वीर्यवर्धनमिदं तु वदन्ति ॥

---

१. T2. P1. P2 हितं मतम्
२. J1. तथा । Bh. नवीनस्य । अन्यत्रापि—

अथास्य सेवनकालः ।

नारिकेराम्बु भुक्तेः[1] प्राग् गुल्माग्निसदनादिहृत् ।
अतः परं न पेयं स्यात् सेन्दु तच्छीतलं हितम् ॥

क्षयोपवासाध्वगमातिभाष्य-
व्यवायवातातपपीडितानाम् ।
व्यायामिनां वातकफोत्तराणां
येन्नारिकेरादुदकं प्रशस्तम्[2] ॥

सेन्दु सकर्पूरम् ।

इति नारिकेरोदकम् ।

---

शतपत्राम्बु सहसा रक्तपित्तग्रहापहम् ।
मूर्च्छाविन्नासशमनं दाहतृष्णानिवारणम् ॥

गुलाबोदकम्[3] ।

---

१. J1. भुक्त्वा प्राक्।

२. Bh. यन्नारिकेरोदकमेव शस्तम् ।
J1. T1, Bh. omit सेन्दु सकर्पूरम् ।

३. Bh. adds :— अथ गुलाबोदकप्रकरणम् ।

तत्करणं च —

कुडवं शतपर्णीनां विवृतं तत्र निक्षिपेत् ।
जलं सप्तपलं पात्रे रौप्यं वर्गे सुसंस्कृतेः ॥

ताम्रजे वाथ तस्योर्ध्वं दोलायन्त्रं निवेशयेत् ।
रौप्यपात्रं तदूर्ध्वं तु पश्चाद्रौप्यशरावयोः ॥

आच्छाद्य तन्मुखं रुद्ध्वा समन्तात् पाचयेच्छनैः ।
मृद्वग्निना मुहूर्तं तु पश्चादुद्धृत्य तज्जलम् ॥

रौप्यपात्रस्थितं विद्वानेष पुष्परसो वरः ।
सुशीतलस्सुगन्धश्च ग्रीष्मे वर्षात्यये तथा ॥

राज्ञा दाहप्रशान्त्यर्थं सिञ्चेदम्भो भिषग्वरः ।
रक्तकृद्दाहशान्त्यर्थं गुलाबपरमाभिधः (?) ॥

तेन हृत्कण्ठशुद्धिः स्यात् सुखेनान्नं पतत्यधः ।
स्नेहयुक्तं च यद् भुक्तं ततः सन्तर्पणं भवेत् ॥

आदौ द्रवं समश्नीयात् तथाम्बु न पिबेद्बहु ।
मध्ये तु कठिनं भुक्त्वा यथेष्टं वस्यते जलम् ॥

प्राग्द्रवं पुरुषोऽश्नीयात् मध्ये तु कठिनाशनः ।
अन्ते पुनर्द्रवाशी च बलारोग्ये न मुञ्चति ॥

तथैव भोजनस्यान्ते पीतमम्बु बलप्रदम् ।
द्रवं भयाति भुक्तान्ते किन्तु तन्मात्रया पिबेत् ॥

समस्थूलकृशा भुक्तमध्यान्तप्रथमाम्बुपाः ।
क्वचिदुष्णं क्वचिच्छीतं क्वचित् क्वथितशीतलम् ॥

क्वचिद्भेषजसंयुक्तं न क्वचिद् वारि वार्यते ।
पूरयेद् भागयुगलं कुक्षेरन्नेन सुस्थितः ॥

जलेनैकं चतुर्थं च वायुसञ्चरणाय वै ।
वासितं नूतनैः पुष्पैः पाटलीचम्पकादिभिः ॥

पथ्यं सुगन्धि हृद्यं च शीतलाम्बु सदा पिबेत् ।
ग्रीष्मे शरदि पातव्यं स्वेच्छया सलिलं नरैः ॥

अन्यदा कल्पमेवैतद् वातश्लेष्मभयात् पिबेत् ।
[१]कल्पं स्वल्पम् ।

अन्नेनापि विना जन्तुः प्राणान् सन्धारयेच्चिरम् ।
तोयाभावे पिपासार्तः सद्यः प्राणैर्विमुच्यते ॥

अथ काष्ठविशेषेण तापितवारिगुणाः ।

गन्धर्वहस्तकाष्ठैस्तु तप्तं वारि प्रदूषितम् ।
अलक्ष्मीरक्तपित्तादिदोषाणां च प्रसाधनम् ॥

[२]गन्धर्वहस्तः एरण्डः ।

भल्लातकस्य काष्ठैस्तु तप्तं यच्च शुभोदकम् ।
वातश्लेष्महरं पथ्यं वीर्यतेजोविवर्धनम् ॥

---

१. $J_1$. $T_1$. omit कल्पं स्वल्पम् ।
२. $J_1$. $T_1$. omit गन्धर्वहस्तः एरण्डः ।

पलाशोदुम्बरोद्भूतकाष्ठैस्तप्तं च वारि यत् ।
व्रणकण्डूहरं चासृग्बलवीर्यविवर्धनम् ॥

जम्बूवटाश्वत्थैः काष्ठैस्तप्तं वारि तटागजम् ।
मेधाबलप्रदं वीर्यकारि दोषविनाशनम् ॥

बदरीसम्भवैः काष्ठैस्तप्तं वापीसमुद्भवम् ।
कफघ्नं च निर्दिष्टं दोषाणां च विनाशनम् ॥

काष्ठैः खदिरजैस्तप्तं रक्तपित्तविनाशनम् ।
आप्यायनकरं ग्रीष्मे श्रेष्ठमेतत्परं जलम् ॥

कदम्बनिम्बबैस्तप्तं काष्ठैर्वारि सरिद्भवम् ।
पथ्यं दोषहरं कण्डूरक्तपित्तविनाशनम् ॥

धात्रीदारुसमुद्भूतकाष्ठैस्तप्तं च यज्जलम् ।
वातपित्तहरं श्रेष्ठं रसायनकरं परम् ॥

पुष्करस्य च काष्ठेन तप्तं कूपोद्भवं जलम् ।
वातपित्तहरं श्रेष्ठं रसायनकरं परम् ॥

कर्कन्धुदारुसम्भूतकाष्ठैस्तप्तं च यज्जलम् ।
जठराग्नेः प्रसादनं सुश्रुतेन प्रभाषितम् ॥

सल्लकीशाकनिर्यासकाष्ठैश्चापि पृथक् पृथक् ।
तप्तं निर्झरजं वारि तद् रोगान् जनयेद्बहून् ॥

सल्लकी सालयी । शाकः साव । निर्यासः राळाचें झाड् ॥

वटैश्चार्जुनकाष्ठैश्च सततं तापितं जलम् ।
बलमेधाप्रजननं मैत्रेयेण प्रभाषितम् ॥

---

१. J1. omits this verse.
२. J1. omits आप्यायन ...... रक्तपित्तविनाशनम् ।
३. J1. omits this verse.
४. J1. T1. omit सल्लकी..... राळाचें झाड् ।
५. J1. प्रदर्शितम् ।

अथ पात्रविशेषस्थितजलगुणाः ।

हेमपात्रे च सुस्वादु विपाके शीतलं लघु ।[1]
त्रिदोषशमनं वीर्यबलमेधाकरं शुभम् ॥

त्रपुपात्रोदकं यच्च पिच्छलं मधुरं रसे ।
वीर्ये कफकरं चाग्निशकृन्मारुतवर्धनम् ॥

त्रपु कथिल ।[2]

घोषपात्रे यदत्युष्णं विपाके कटुकं गुरु ।
पित्तश्लेष्मप्रदं वृद्धे यथाकालानुरूपि च ॥

घोषं कांस्यम् ।[3]

ताम्रपात्रस्थितं वारि लोष्णं स्वादु सकृत्कटु ।
पित्तानलप्रदं वृद्धे सकृन्मारुतनाशनम् ॥

सकृत् सद्यः ।[4]

रीतिपात्रस्थितं तोयं कटु श्लेष्मविनाशनम् ।
पित्तलं सकृदुष्णं च मेहरोगविवर्धनम् ॥

रीति पित्तल ।[5]

लोहपात्रस्थितं वारि पानमत्यन्तदूषितम् ।
रक्तपित्तहरं कण्डूत्रिदोषशमनं परम् ॥

भाजने मृन्मये तप्तं मलानां क्षालने हितम् ।
धातुसाम्यकरं वीर्यबलौजःपरिवर्धनम् ॥

इति पात्रविशेषेण तोयगुणाः ।

इति जलप्रकरणम् ॥

---

१. J1. T1. शीतलं मधु ।
२. J1. T1. omit त्रपु कथिल ।
३. J1. T1. omit घोषं कांस्यम् ।
४. J1. T1. omit सकृत् सद्यः ।
५. J1. T1. omit रीति पित्तल ।

## अथ सविषान्नादिपरीक्षा ।

ओदनो विषवान्सान्द्रो यात्यविस्रावितामिव[1] ।
चिरेण पच्यते पक्वो भवेत्पर्युषितोपमः ॥
मयूरकण्ठतुल्योष्मा मोहमूर्च्छाप्रसेककृत् ।
हीयते गन्धवर्णाद्यैः क्लिद्यते चन्द्रकाचितः ॥
व्यञ्जनान्याशु शुष्यन्ति ध्यामक्वाथानि तत्र च ।
हीनातिरिक्ता विकृता छाया दृश्येत नैव वा ॥
फेनोर्ध्वराजीसीमन्ततन्तुबुद्बुदसम्भवः ।
विच्छिन्नविरसा रागाः खाडवाः शाकमामिषम् ॥
नीला राजी रसे ताम्रा क्षीरे दध्नि च दृश्यते ।
श्यामा पीता सिता तक्रे घृते पानीयसन्निभा ॥
मस्तुनि स्यात् कपोताभा राजी कृष्णा तुषोदके ।
नसामद्योश्च तद्वच्च कपिलाभा द्रवौषधे ॥
काळी मध्याम्भसोः क्षौद्रे हरित्तैलेऽरुणोपमा ।
पाकः फलानामामानां पक्वानां परिकोथनम् ॥
द्रव्याणामार्द्रशुष्काणां स्यातां म्लानिविवर्णते ।
मृदूनां कठिनानां च भवेत् स्पर्शविपर्ययः ॥
माल्यानां स्फुटिताग्रत्वं म्लानिर्गन्धान्तरोद्भवः[2] ।
ध्याममण्डलता वस्त्रे शातनं तन्तुपक्ष्मणाम् ॥
धातुमौक्तिककाष्ठाश्मरत्नादिषु मलाक्तता ।
स्नेहस्पर्शप्रभाहानिः सप्रभत्वं च मृन्मये ॥

### विषद[3]लक्षणम् ।

विषदः श्यामशुष्कास्यो विलक्षो वीक्षते दिशः ।
स्वेदवेपथुमांस्त्रस्तो भीतः स्खलति जृम्भते ॥

---

१. $J_1$. $T_1$. यात्यविश्राव्यतामिव, Bh. यात्यविश्राव्यतामिव ।
२. $J_1$. म्लानिर्गन्धान्तरोद्भवः, Bh. म्लानिर्गन्धान्तरो भवेत् ।
३. $J_1$. विषदपरीक्षणम्, Bh. omits विषदलक्षणम् ।

[1]प्राप्यान्नं सविषं त्वग्निरेकावर्तः स्फुटत्यपि ।
शिखिकण्ठाभधूम्रार्चिरनर्चिर्वोग्रगन्धवान् ॥

म्रियन्ते मक्षिकाः प्राश्य काकः क्षामस्वरो भवेत् ।
वि[2]क्रोशन्ति च दृष्ट्वैव शुकदात्यूहशारिकाः ॥

हंसः प्रस्खलति ग्लानिर्जीवञ्जीवस्य जायते ।
चकोरस्याक्षिवैराग्यं क्रौञ्चस्य स्यान्मदोदयः ॥

कपोतपरभृद्दक्षचक्रवाका जहत्यसून् ।
उद्वेगं याति मार्जारः शकृन्मुञ्चति वानरः ॥

हृष्येन्मयूरस्तद्दृष्ट्या मन्दतेजो भवेद्विषम् ।
इत्यन्नं विषवज्ज्ञात्वा त्यजेदेवं प्रयत्नतः ॥

यथा तेन विपद्येरन्नपि न क्षुद्रजन्तवः ।
स्पृष्टे तु कण्डूदाहोष्मज्वरार्तिस्फोटसुप्तयः ॥

नखरोमच्युतिः शोफः सेकाद्या विषनाशनाः ।
विरुद्धमपि चाहारं विद्याद्गरविषोपमम् ॥

इति सविषान्नादिपरीक्षा ॥

---

अथ विरुद्धद्रव्यप्रकरणम् ।

आनूपमामिषं माषक्षौद्रक्षीरविरूढकैः ।
विरुध्यते सह बिसैर्मूलकेन गुडेन वा ॥

विशेषात् पयसा मत्स्या मत्स्येषु च चिलीचिमः ।
विरुद्धमम्लं पयसा सह सर्वं फलं तथा ॥

तद्वत्कुलत्थवरककङ्गुवल्लमकुष्ठकाः ।

वरकः वनकोद्रवः ।

भक्षयित्वा हरितकं मूलकादि पयस्त्यजेत् ॥

---

१. $J_1$, adds किञ्च — before प्राप्यान्नं & etc.
२. $P_2$, विशोचन्ति, Bh. उत्क्रोशन्ति ।

भक्षयित्वा हरितकमिति । मूलकादि हरितकं भक्षयित्वा पयस्त्यजेदित्यर्थः ।

वाराहं श्वाविधा नाद्याद् दध्ना पृषतकुक्कुटौ ।
आममांसानि पित्तेन माषसूपेन मूलकम् ॥

अविं कुसुम्भशाकेन बिसैस्सह विरूढकम् ।
माषसूपगुडक्षीरदध्याज्यैः लाकुचं फलम् ॥

फलं कदल्यास्तक्रेण दध्ना तालफलेन वा ।
कणोषणाभ्यां मधुना काकमाची गुडेन वा ॥

सिद्धां वा मत्स्यपचने पचने नागरस्य वा ।
सिद्धामन्यत्र वा पात्रे कांस्ये तामुषितां निशि ॥

मत्स्यनिस्तलनस्नेहसाधिताः पिप्पलीस्त्यजेत् ।
कांस्ये दशाहमुषितं सर्पिरुष्णं त्वरुष्करैः ॥

भासो विरुध्यते शूल्यः कम्पिल्लस्तक्रसाधितः ।
ऐकध्यं पायससुराकृसराः परिवर्जयेत् ॥

मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः ।
एकत्र वा समांशानि विरुध्यन्ते परस्परम् ॥

भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतः ।
मधु पुष्करबीजं च मधुमैरेयशार्करम् ॥

मन्थानुपानः क्षैरेयो हारिद्रः कटुतैलकान् ।

[1]मन्थः द्रवानुलोडितसक्तवः । क्षैरेयः पायसः । हारिद्रः पीतवर्णच्छत्राकः ॥

उपोदकातिसाराय तिलकल्केन साधिता ॥

[2]उपोदका बसला ।

१. $J_1$. $T_1$. Bh. omit मन्थ......पीतवर्णच्छत्राकः ।
२. $J_1$. $T_1$. Bh. omit उपोदका बसला ।

बलाका वारुणीयुक्ता कुल्माषैश्च विरुध्यते ।
भृष्टा वराहवसया सैव सद्यो निहन्त्यसून् ॥

तद्वत्तित्तिरिपत्राढ्यगोधालावकपिञ्जलाः ।
ऐरण्डेनाग्निना सिद्धास्तत्तैलेन विमूर्च्छिताः ॥

[1]पत्राढ्यो मयूरः । तद्वत् बलाकावत्, सद्यो घ्नन्ति ।

हारीतमांसं हारिद्रशूलकप्रोतपाचितम् ।
हरिद्रावह्निना सद्यो व्यापादयति जीवितम् ॥

[2]हारिद्रशूलकं हरिद्रावह्निनेत्यत्र च दारुहरिद्रा ।

भस्मपांशुपरिध्वस्तं तदेव च समाक्षिकम् ।

[3]तदेव हारीतमांसमेव । सद्यो हन्तीति शेषः ।

यत् किञ्चिद् दोषमुत्क्लेश्य न हरेत्तत्समासतः ।
विरुद्धं शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ॥

व्यायामस्निग्धदीप्ताग्निवयःस्थबलशालिनाम् ।
विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम् ॥

इति विरुद्धद्रव्यप्रकरणम् ॥

अथ पथ्यापथ्याभ्यासत्याग[4]प्रकारः —

पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत् ।
निषेवेत हितं तद्वदेकद्वित्र्यन्तरीकृतम् ॥

अपथ्यमपि हि त्यक्तं शीलितं पथ्यमेव वा ।
सात्म्यासात्म्यविकाराय जायते सहसान्यथा ॥

इति । अयमर्थः, अभ्यस्तमभ्यासात् सात्म्यतां यातं अपथ्यं पादेन चतुर्थांशेन पादपादेन षोडशांशेन वा त्यजेत् । हितं पथ्यं तद्वत्

---

१. J1. T1. Bh. omit पत्राढ्यो......सद्यो घ्नन्ति ।
२. J1. T1. Bh. omit हारिद्र......दारुहरिद्रा ।
३. J1. T1. Bb. omit तदेव......शेषः ।
४. J1. प्रकारस्तु ।

अपथ्यत्यागवन्निषेवेत, यावता अंशेनापथ्यं त्यक्तं तावतांशेन पथ्यं भजेदित्यर्थः। नित्यसेव्यस्याहारस्य या मात्रा तस्या अपथ्येन यो न्यूनांशः तं पथ्येन पूरयेदिति उक्तं भवति। उभयमप्येकद्यन्तरीकृतं एकद्वित्रिदिवसैरन्तरीकृतेन विजातीयभोजनेन व्यवहितम्।

एतदुक्तं भवति। यदा पादेन त्यागः क्रियते तदा प्रथमेऽहनि अपथ्यस्य त्रयः पादाः पथ्यस्यैकः, द्वितीये चत्वारोऽप्यपथ्यस्य, तृतीये प्रथमवत्, इत्येकान्तरीकरणम्। चतुर्थे द्वौ पथ्यस्य द्वावपथ्यस्य। पञ्चमषष्ठयोस्तृतीयवत्। सप्तमे चतुर्थवत्, इति द्व्यन्तरीकरणम्। अष्टमे त्वपथ्यस्यैकः त्रयः पथ्यस्य। नवमदशमैकादशेषु सप्तमवत्। द्वादशेऽष्टमवदिति त्र्यन्तरीकरणम्। त्रयोदशे चत्वारोऽपि पथ्यस्य। चतुर्दशे द्वादशवत्। पञ्चदशे त्रयोदशवत्। इति पादेनापथ्यत्यागपूर्वं पादेन पथ्याभ्यासे क्रमः। पादपादेन त्वभ्यासे एकद्वित्र्यन्तरीकरणस्य पञ्चकृत्व आवृत्तिः, तत्र एकान्तरीकरणम्। एवं त्रिषष्ट्यादिदिवसैः षोडशांशाः पूर्यन्ते इति पादपादेन।

मात्रायोगक्रियादेशकालावस्थादिभेदतः।
ततस्ततो यतो दृष्टास्ते ते भावास्तथा तथा॥

हिताहितत्वेऽप्येकान्तनियमोऽस्मादनिश्चितः।
मात्रया सेवितं द्रव्यं हन्ति रोगांस्तदुद्भवान्॥
निषेव्यमाणं तिलशो विषमप्यमृतायते।
हीनातिमात्रमशनं मरुत्पित्तकफकोपनम्॥
भजेते विषरूपत्वं तुल्यांशे मधुसर्पिषी।
क्षारोऽम्लरससंयोगे मधुरीभवति क्षणात्॥
उत्तुंडक्यास्तिण्डकेन तिक्तता मधुरायते।

उत्तुण्डकी काकतिक्ता।

कोद्रवो हन्त्यसृक्पित्तं तत्करोत्यविदाहिभिः।
कुष्ठं तत्कार्यपि तिलो हन्ति भल्लातकैस्सह॥
गुडः कर्ताग्निसादस्य स हिनस्त्यभयादिभिः।
जीवनीयमपि क्षीरं विषलेशे तु मृत्यवे।

---

१. J1. omits चतुर्थे ... ... अन्तरीकरणम्।
२. J1. पथ्यत्यागे न क्रमः।

तुल्ये अपि हतोऽन्योन्यं विषे स्थावरजङ्गमे ।
सक्तवो वातला रूक्षाः पीतास्ते तर्पयन्त्यपि ॥
विनापि चोपयोगेन मणिमन्त्रादिकार्यकृत् ।
आर्द्रकाज्जायते शुण्ठी संस्कारेण लघीयसी ॥
लघुभ्योऽपि हि सक्तुभ्यो गुरवः सक्तुपिण्डकाः ।
भृष्टः क्षुण्णोऽपि पृथुको रक्तशालेर्लघोर्गुरुः ॥
शालिपिष्टो गरीयस्त्वं गोधूमादपि गच्छति ।
लघुः पित्तहरो लाजो व्रीहितो गुरुपित्तलात् ॥
संग्राहिणो लघोर्मुद्गात्कुल्माषो भेदनो गुरुः ।
आमं ग्राहितरं तक्रं तत्खलीकृतमन्यथा ॥
गुडतोयाच्च सुतरां मूत्रलं गुडपानकम् ।
गरीयो गुडदध्युक्तं रसाला चातिशुक्रला ॥
दण्डादिमन्थनाद्दध्नो गुरुणश्चातिशोफदात् ।
अनुद्धतस्नेहमपि तक्रं शोफहरं लघु ॥
सर्पिः स्निग्धतरं हन्ति नार्दितं नवनीतवत् ।
चक्षुष्योऽपि हि गोधूमस्तैलपक्वस्तु दृष्टिहा ॥
मूलकं दोषजननं सिद्धं तु तद्दोषलम् ।
उष्णं विषीभवत्येव विपन्नमपि माक्षिकम् ॥
दुर्भोजनस्था द्राक्षाम्ला दोषला च प्रजायते ।
श्लक्ष्णः पिष्टो घनो लेपश्चन्दनस्यापि दाहकृत् ॥
मेध्यस्तिलः स्पर्शशीतो मेध्यं तैलं खलो हिमः ।
तस्यैव श्लेष्मकारित्वं न तैलस्य खलस्य वा ॥
दध्नः श्वयथुकारित्वं न तक्रनवनीतयोः ।
भूरि सात्म्यं दधिक्षीरकरीरं मरुवादिषु ॥
क्षाराः प्राच्येषु मत्स्याश्च सैन्धवेष्वन्ध्रकेषु च ॥

---

१. Bh. गरीयश्चातिशोफकृत् ।
२. J1; T ; Bh. भूमिसात्म्यं ।

तैलाम्लं कन्दमूलानि मलये कोङ्कणे पुनः ।
पेया मन्थ उदीच्ये तु गोधूमोऽवन्तिभूमिषु ॥
बाह्लीका बह्लवाश्चीनाश्शूलिका यवनाः शकाः ।
मांसगोधूममाद्वींकशस्त्रवैश्वानरोचिताः ॥
देहसात्म्यं घृतं क्षीरं मद्यं मांसं तु कस्यचित् ।
पेयायूपो रसोऽन्यस्य गोधूमोन्यस्य शालयः ॥
अहितैरपि तेषां तु तैरेवोपहितं हितम् ।
अन्नपानौषधं दोषमात्राकालाद्यपेक्षया ॥
सात्म्यं चाशु बलं धत्ते नातिदोषं च बह्वपि ॥
स्रंसनं सत्पयो गव्यं भवति ग्राहि कस्यचित् ॥
मन्दाग्निर्भवति प्रायः कफवातोत्तरो हि ना ।
विषघ्नेनापि पयसा देहेऽहेर्वर्धते विषम् ॥
स्थूलस्थविरबालादौ वमनादि निषिध्यते ।
तक्रमामं कफं हन्ति कोष्ठे कण्ठे करोति च ॥
वातहृत्त्वेऽपि माद्वींकखर्जूरं कोष्ठवातकृत् ।
नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम् ॥
दृष्टेः स्पर्शे हिमं द्रव्यं श्रोत्रस्योष्णं तु पूजितम् ।
पयः स्वादुरसं शीतं विपरीतं ततो दधि ॥
कालेन जायते तस्मात् क्षीरवच्च पुनर्घृतम् ।
पयो दधि च वातघ्नमजातं वातलं तु तत् ॥
तक्रं ग्राहि कषायाम्लमम्लमेव तु भेदनम् ।
धातकीगुडतोयानि कारणं मद्यशुक्तयोः ॥
शीते न तु तदाद्यन्ते स्निग्धाम्ललवणा हिताः ।
उदमन्थदिवास्वप्नौ ग्रीष्मादन्यत्र गर्हितौ ॥
समयोगेऽपि घर्माद्या वातादिचयहेतवः ।
ऋतुष्वन्यो रसेष्वन्यो रौक्ष्यस्नेहबलक्रमः ॥
रसायनं काचमाची सद्यः पर्युषिता विषम् ।

1. J1; T1. माद्वींका खर्जूरं । Bh. माद्वींकाद् खर्जूरं ।

मूलकं दोषजिद् बालं विपरीतं तु दोषकृत् ॥

अपथ्यं पथ्यमप्यन्नं निशायां नेत्ररोगिणाम् ।
अहिताः सक्तवः शुष्का हितास्ते तु प्रमेहिणाम् ॥

गुल्मिनः क्षीरदध्यादि हिङ्गुपादियुतं हितम् ।
वातलं वातकोपेऽपि वर्षासु मधु शस्यते ॥

तदेव मद्यं मद्यस्य विषस्य तु विषान्तरम् ।

निवारणमिति शेषः ।

घृतमानूपदेशोत्थं हेमन्ते च बलाधिकम् ॥

स्वेदैर्याति शमं दाहः प्रायो लशुनपानजः ।
दिवास्वापाज्जरां याति भुक्तमन्येद्युरद्य न

कोष्ठे रुद्धोऽग्निकृद्वायुर्मेदसार्शोभिरग्निहृत् ।
छर्दिघ्ना मक्षिकाविट् तु वामयेन्मक्षिकैव तु ॥

सर्वथा दोषजित् तक्रं ग्रहण्यां दोषकृद् व्रणे ।
पीनसश्वासकासादौ सिद्धमेव प्रशस्यते ॥

इत्येतेऽन्ये च बहवः सूक्ष्मा दुर्बलहेतुकाः ।
धर्मा विचित्रा भावेषु किञ्चिदेषां निदर्शितम् ।

दिशानया शेषमपि स्वयमूहेत बुद्धिमान् ।
इति भावेषु वैचित्र्यनिरूपणम् ॥

अथ पथ्यापथ्यशमनम् ।

नारीकेरफलेऽथ तण्डुलमथ क्षीरं रसाले हितं
जम्बीरोत्थरसो घृते समुचितस्सर्पिस्तु मोचाफले ।
गोधूमेषु च कर्कटी हिततमा मांसात्यये काञ्जिकं
नारङ्गे गुडभक्षणं च विहितं पिण्डालुकं कोद्रवे ॥

---

१. $J_1$. हिङ्गुषादियुतं, $T_1$. Bh. हङ्गुषादियुतं

२. $J_1$. Bh, omit निवारणमिति शेषः; $T_1$. निवारण इति शेषः ।

३. $J_1$. Bh. omit इति निरूपणम् $T_1$. इति धर्मभावेषु धर्मवैचित्र्य-निरूपणम् ।

४. $J_1$; $T_1$. अपथ्यशमनम् Bh. omits अथ पथ्यापथ्यशमनं इति स्वभावाद-हितानि । ... on l. P. and simply reads अथ पथ्यापथ्यशमनं अजीर्णमञ्जर्यां द्रष्टव्यम् । इति स्वभावादहितानि अथ स्वभावतो हिताहितानि पथ्याध्ये ज्ञेयं ।

पिष्टाम्ले सलिलं प्रियालुफलजे पथ्या हिता माषजे
खण्डं क्षीरभवे च तक्रमुचितं कोष्णाम्बु कालाम्लजे ।
मात्स्ये चूतफलं त्वजीर्णशमनं मस्त्वम्बु पानात्यये
तैले पुष्करजे कटु प्रशमनं शेषं तु बुद्ध्या जयेत् ॥

तथा—

पनसे कदलं कदले च घृतं घृतपाकविधावपि जम्बरसः ।
तदुपद्रवशान्तिकरं लवणं लवणेऽपि च तण्डुलवारि परम् ॥

नारिकेरफलतालबीजयोः पाचनं सपदि तण्डुलं विदुः ।
ते वदन्ति मुनयोऽथ तण्डुलान् क्षीरवारि परिपाचयेदिति ॥

दाडिमामलकतालतिन्दुकीबीजपूरलवलीफलानि च ।
बाकुलेन च फलेन पाचयेत् पाकमेति बकुलं स्वबीजतः ॥

मधूकमालूरनृपादनानां परूषखर्जूरकपित्थकानाम् ।
पाकाय पेयं पिचुमन्दबीजं सिद्धार्थको हन्ति च बीजपूरम् ॥

मृणालखर्जूरकहारहूराकसेरुशृङ्गाटकशर्कराणाम् ।
यथा विपाकाय च भद्रमुस्तं तथा रसोने च पयः प्रशस्तम् ॥

आम्रातकोदुम्बरपिप्पलानां फलानि च प्लक्षवटादिकानाम् ।
स्युः शर्मणे पर्युषितोदकेन सौवर्चलेनाम्रफलस्य पाकः ॥

सौवीरं फलमपि चोष्णवारि हन्यात् प्राचीनामलकमपीह राजिकैका ।
नागरं हरति बिल्वजाम्बवं शर्करा पचति तिन्दुकीफलम् ।

जीरकं पचति बाकुलोद्भवं पाचयेन्मधुरिका कपित्थजम् ॥

---

१. Revisor adds in the margin;
खर्जूरशृङ्गाटकयोः प्रशस्तं विश्वौषधं तत्र च भद्रमुस्तम् ।
यथाश्वबोधिद्रुफलेषु शीतं प्लक्षे तथा पर्युषितं प्रपतिम् ॥
तण्डुलेषु पयसो जलं हितं दीप्यकं तु (त्रिविदुकेणायुतम् ? ।)
षष्टिको दधिजलेन जीर्यते कर्कटी च सुमतेषु जीर्यते ॥
before सौवीरं etc.

२. Revisor adds in margin:
खर्जूरं सपरुषकं प्रियालक्षीरी सारफलं पचेन्मरीचम् ।
before नागरं हरति etc.

पनसकामलकीफलपक्तये भजत सर्जतरोरपि बीजकम् ।
सकलमप्युदितानुदितं फलं प्रपचति प्रसुतं वटतिन्दुकम् ॥
आर्द्राप्रबीजं पनसस्य पक्त्यै रसालपक्त्यै घनरावबीजम् ।
अपूपपक्त्यै सजला यवानी सा कैश्चिदुक्ता पृथुकस्य पक्त्यै ॥

घनरावस्तण्डुलीयकः ।

पालङ्किकाकम्बुककारवल्लीवार्ताकवंशाङ्कुरमूलकानाम् ।
उपोदकालाबुपटोलकानां सिद्धार्थको मेघरसस्य पक्ता ॥
पटोलवंशाङ्कुरकारवल्लीफलान्यलाबूनि फलानि जग्ध्वा ।
क्षारोदकं ब्रह्मतरोर्निपीय भोक्तुं पुनर्वाञ्छति तावदेव ॥

वास्तूकसिद्धार्थकचुञ्चुशाकं
प्रयाति सद्यः खदिरेण पाकम् ।
यथा गुडः सूरणनागरङ्गौ
तथालुकं तण्डुलवारि हन्ति ॥

पत्राणि पुष्पाणि फलानि यानि
मूलानि पूर्वं न मयोदितानि ।

---

१. $J_1$. $T_1$. कटु तिन्दुकम् ।

२. $J_1$. Revisor adds in the margin
शाकानि रूक्षाण्यपि यान्ति पाकं
क्षारेण सद्यस्तिलनालजेन ।
स्निग्धेषु रूक्षं च तदप्यनेन
स्निग्धं च रूक्षेण च पाकमेति ॥
(मरीचापि वच्छीध्रं ? ) पाकं यात्येव काञ्जिकम् ।
क्षीरं जीर्यति तक्रेण तद्गव्यं कोष्णमण्डकात् ।
माहिषं मणिमन्थेन शङ्खचूर्णेन तद्दधि ॥
रसाला जीर्यति व्योषाद् खण्डं नागरभक्षणात् ।
सिता नागरमुस्तेन तथेक्षुश्चार्द्रकाशनाद् ॥
(जिरामिरगैः ? चरामिरागै)रिकचन्दनाभ्यामभ्येति शीघ्रं मुनिभिः प्रदिष्टम् ।
उष्णेन शीतं शिशिरेण चोष्णं जीर्णं भवेत् क्षारगणस्तथाम्लैः ॥
विपच्यते सूरणकं गुडेन तथालुकं तण्डुलजोदकेन ।
शीतलकं जीर्यति कोरदूषाद् कसेरुपाकाः किल नागरेण ॥
before पत्राणि पुष्पाणि etc.

कस्तूरिका सिल्हकनाभिमेव
जलं पचत्याशु समुद्रफेनः ॥

निम्बूफलेनाथ यवोपणेन
तक्रेण वा सर्पिरुपैति पाकम् ।
शाकानि सर्वाण्युपयान्ति पाकं
क्षारेण तान्येव तिलोद्भवेन ॥

काञ्जिकं हि लवणान्वितं भृतं
पिष्टपाचनकमादिशन्ति हि ।
सर्पिरेव यवशूकसंयुतं
मांसपाचनमथोष्णवारिणा ॥

श्यामाकनीवारतिलातसीनां
निष्पावकङ्गूयवपिष्टिकानाम् ।
मन्थेन पाकोऽथ कुलत्थचिञ्चा-
पाकाय पेयं तिलतैलमेकम् ॥

गोधूममाषौ हरिमन्थमुद्गौ
यवान् सतीनान् कितवो निहन्ति ।
यन्मातुलुङ्गीफलमेति पाकं
क्षणेन सोऽयं लवणानुभावः ॥

सतीनो लङ्का । कितवो धुत्तूरः ।

कर्पूरपूगीफलनागवल्ली-
काश्मीरजातीफलजातिकोशम् ।

---

१. $J_1$. Revisor adds in the margin:—
गोधूममाषहरिमन्थयवानुमुद्गा-
(पाको भवेदिति मातुलपुत्रकेन ?)
खण्डं च खण्डयति भक्षभवंत्यजीर्णं? (भक्षभवं त्वजीर्णं)
तैलं कुलित्थमथवा विदधाति जीर्णम् ॥
(कङ्गुश्यामाकनीवाराः कुलित्थं विलंखितुम् ।?)
दध्ना जलेन जीर्यन्ति वैतुलाः काञ्जिकेन तु ।

तैलानि सर्वाणि तिलादिजानि
 प्रयान्ति पाकं किल काञ्जिकेन ॥

शृङ्गबेररस एव केवलः
 क्षारतोयमथवा पलाशजम् ।
ऐक्षवं रसमुदस्यति क्षणा-
 दग्निवेशमुनिनेदमीरितम् ॥

माहिषे पयसि सिन्धुजं यथा
 सैन्धवं कृसरपक्तये तथा ।
काञ्जिकं च विदळान्नपक्तये
 शीलयन्ति जठराग्निपक्तये ॥

किमत्र चित्रं च समांसमत्स्य-
 भोजी सुखी स्यात् परिपीय शुक्तम् ।
इत्यद्भुतं केवलवह्निपक्व-
 मांसेन मत्स्यः परिपाकमेति ॥

कपोतपारावतनीलकण्ठ-
 कपिञ्जलानां पिशितानि जग्ध्वा ।
कांसस्य मूलं परिपीय पिष्टं
 जनः सुखी स्याद् बहुशो हि दृष्टम् ॥

कोष्णेन खण्डेन गवां पयस्तु
 व्योषै रसाला परिपाकमेति ।
शङ्खस्य चूर्णेन हयारिनारी-
 पयोदधिक्षीरमुपैति पाकम् ॥

शुण्ठी सतीनस्य च नागरङ्ग-
 जम्बीरयोः कोद्रवको निहन्ति ।

---

१. $J_1$. Revisor adds in the margin:—
आम्रमाम्रफलं मीने तद्बीजं पिशिते हितम् ।
कूर्ममांसं यवक्षाराच्छीघ्रं पाकमुपैति हि ॥ before करोत etc.

जीरा(जरा)मिरा चन्दनगैरिकाभ्यां
नश्यन्ति तज्जा अपि ये विकाराः ॥

वटा वेसवारैर्लवङ्गेन फेनी
शमं पर्पटः शिग्रुबीजेन याति ।
कणामूलतो लड्डुकापूपसङ्घा
विपाको भवेच्छष्कुलीमण्डयोश्च ॥

श्वाविड्गोधागण्डकाश्चित्रतैला-
द्यावक्षारात् कोलकूर्मादयोऽपि ।
मौद्गाद्यूषात् पायसो याति पाकं
सामुद्राद्प्यारनालं सुखाय ॥

तप्तं तप्तं हेम वा तारमग्नौ
वारं वारं क्षिप्तमम्भस्यथैतत् ।
पीत्वा तोयं दीर्घकालोपपन्न-
मम्भोऽजीर्णं शीघ्रमेवं जहाति ॥

कूश्माण्डकं च त्रपुसीफलं च
कर्कारुचीनातकयोः फलं च ।
निहन्ति सद्यो हि करञ्जबीज-
रसैर्यथैवा(रिण?)मूलमेकम् ॥

स्त्रीकेशाम्बु निपीतमाशु हन्यात्
प्राचीनामलकरसं सपाणिमर्दम् ।
शुण्ठीधान्याकवारि हन्ति सद्य-
स्तांस्तानामविलासजान् विकारान् ॥

---

१, J1. Revisor gives a variant reading also in the margin :

तोयं क्षिप्तं सप्तकृत्वस्तदम्भः ।
पीत्वाजीर्णं तोयजातं निहन्यात्
तत्र क्षौद्रं भद्रयुक्तं विशेषात् ॥

तत्र तोयाजीर्णे ।

मृगस्य मांसं श्रमजेऽनुकूलं
व्यवायवान्ते शयनं प्रवाते ।
क्षीरोषणैः सैन्धवसाधितं तु
छागाण्डमुक्तं तदिहैव युक्तम् ॥

स्नेहाजीर्णे रोगिणां मुद्गचूर्णं
हन्यान्मस्तो हन्ति वैरेचकानाम् ।
माषाण्डयोर्निम्बमूलेन पाक-
श्चिञ्चा मुञ्चत्यम्लतां चूर्णयोगात् ॥

कोष्णाम्बु पिष्टान्नभवे हि देयं
प्रियालमज्जास्विदमेव पेयम् ।
मात्स्यं तु माकन्दफलं निहन्ति
गोधूमकं कर्कटिका निहन्ति ॥

सद्यः प्रियालं विनिहन्ति पथ्या
मध्वम्ब्वजीर्णं विनिहन्ति पथ्या ।
पिण्डालुकः कोद्रवपाककारी
खण्डस्तु माषान्नविकारहारी ॥

मुखं दह्यते चूर्णकेन प्रमादा-
द्यदा नागवल्लीदलस्थेन पुंसः ।
शितातैलसौवीरकैस्तन्निवृत्तौ
पृथक् तस्य गण्डूष एषोपदिष्टः ॥

उष्णेन शीतं शिशिरेण चोष्ण-
मम्लेन च क्षारगुणो गुणाढ्यः ।
स्नेहेन तीक्ष्णं वमनातियोगे
सिता हिता स्यादिति काशिराजः ॥

शीतोदकं चास्यजरोगहारि
नारीपयश्चाञ्जनरुग्विदारि ।

एलोदकं धूमगदेषु शस्तं
धात्रीफलं चातिविरेचनार्ते ॥

श्रवणपूरणजे तिलतैलजं
श्रवणपूरणमेव सुखं विदुः ।
कबलजेषु गदेष्वथ कारयेत्
कंबळमार्द्रयुतं द्रवणं पुनः ॥[1]

मदयति न हि मद्यं जातु चेत् पीतमद्यः
पिबति घृतसमेतां शर्करामेव सद्यः ।
अथ घनमधुकैलाकुष्ठदार्वेलवालु-
प्रकटितकबलास्ये मद्यगन्धोऽपि न स्यात् ॥

माषामृताम्भोधरकट्फलानां
चूर्णं यथापूर्वविवर्धितानाम् ।
विमर्द्य वक्त्रे धृतमाशु हन्ति
सुरारसोनादिजमुग्रगन्धम् ॥

कूश्माण्डकस्य स्वरसो गुडेन
पीतो मदं कोद्रवजं निहन्ति ।
यथा निपीतः सितया समेत
उन्मत्तमत्तत्वमपाकरोति ॥

घ्रात्वा सकक्षां विपिनोपलं वा
सम्प्राश्य किञ्चिल्लवणं नरो वा ।
शीताम्बु पीत्वा बकुलेन वापि
प्रसह्य पूगीमदमुज्जिहाति ॥

सैन्धवत्रिकटुधान्यजीरकै-
र्दाडिमीरजनिरामठान्वितैः ।
पाचनोऽथ जठराग्निदीपनो
वेसवार उदितो मनीषिभिः ।

1. $J_1$: $T_1$· कवलमार्द्रकजम् ।

सूक्तमुक्तमपि तद्बहुभेदं
हन्ति सर्वमिदमामजखेदम् ।
यन्मया समुदितं मधुसूक्तं
तद्भिषग्भिरपि पाचनमुक्तम् ॥

इत्यजीर्णशमनम् ।

---

## अथ स्वभावतो हितानि ।

शालीनां लोहितः शालिः षष्टिकेषु तु षष्टिका ।
शूकधान्येष्वपि यवो गोधूमः प्रवरो मतः ॥

शिम्बीधान्ये वरो मुद्गो मसूरश्चाढकी तथा ।
रसेषु मधुरः श्रेष्ठो लवणेषु च सैन्धवम् ॥

दाडिमामलकं द्राक्षा खर्जूरं च परूषकम् ।
राजादनं मातुलुङ्गं फलवर्गे प्रशस्यते ॥

पत्रशाके तु वास्तूकं जीवन्ती पोतिका वरा ।
पटोलं फलशाकेषु कन्दशाकेषु सूरणम् ॥

एणः कुरङ्गो हरिणो जङ्गलेषु प्रशस्यते ।
पक्षिणां तित्तिरिर्लावो वरो मत्स्येषु रोहितः ॥

जलेषु दिव्यं दुग्धेषु गव्यमाज्येषु गोभवम् ।
तैलेषु तिलजं तैलमैक्षवेषु सिता हिता ॥

इति स्वभावहितानि ।

---

## अथ स्वभावादहितानि ।

शिम्बीषु माषान् ग्रीष्मर्तौ लवणेष्वौखरं त्यजेत् ।
फलेषु लकुचं शाके सार्षपं न हितं मतम् ॥

गोमांसं ग्राम्यमांसेषु न हिता महिषीवसा ।
मेषीपयः कुसुम्भस्य तैलं चाज्यं च फाणितम् ॥

इति स्वभावादहितानि ।

---

अथ संयोगविरुद्धानि ।

मत्स्यमानूपमांसं च दुग्धयुक्तं विवर्जयेत् ।
कपोतं सार्षपस्नेहभर्जितं परिवर्जयेत् ॥

मत्स्यानिक्षोर्विकारेण तथा क्षौद्रेण वर्जयेत् ।
सक्तून्मांसपयोयुक्तानुष्णैर्दधि विवर्जयेत् ॥

उष्णैर्नभोम्बुना क्षौद्रं पायसं कृसरान्वितम् ।
रम्भाफलं त्यजेत्तक्रदधिबिल्वफलान्वितम् ॥

दशाहमुषितं सर्पिः कांस्ये मधुघृते समे ।
कृतान्नं च कषायं च पुनरुष्णीकृतं त्यजेत् ॥

एकत्र बहुमांसानि विरुध्यन्ते परस्परम् ।
एवं द्रव्यगुणान् ज्ञात्वा काले कुर्यात्तु भोजनम् ॥

जन्मनक्षत्रवृक्षाश्चाभक्ष्याः ते च —

अथ वक्ष्यामि नक्षत्रवृक्षानागमचोदितान् ।
पूजनात् पुण्यदांश्चैव वर्धनात् पालनादपि ॥

विषद्रुधात्रीतरुहेमदुग्धा-
जम्बूस्तथा खादिरकृष्णवंशाः ।
अश्वत्थनागौ च वटः पलाशः
प्लक्षस्तथाम्बष्टतरुः क्रमेण ॥

---

१. J1. T1. त्याज्यं च ।

१. J1. omits जन्मनक्षत्र........ च्छेदनभक्षणादिसंग्रहार्थः ।

विल्वार्जुनौ चैव विकङ्कतोऽथ
सकेसराः शम्बरमर्जवञ्जुलाः ।
सपानसार्काश्च शमीकदम्बाः
तथाम्रनिम्बौ मधुकद्रुमश्च ॥

[1]अमी नक्षत्रदैवत्या वृक्षाः स्युः सप्तविंशतिः ।
अश्विन्यादिक्रमादेषामेषा नक्षत्रपद्धतिः ॥

यस्त्वेतेषामात्मजन्मर्क्षभाजां
मर्त्यः कुर्याद् भेपजादीन् मदान्धः ।
तस्यायुष्यं श्रीः कलत्रं च पुत्रा
नश्यन्त्येषां वर्धते वर्धनाद्यैः ॥

इत्युक्ताः । आदिशब्दः छेदनभक्षणादिसङ्ग्रहार्थः ।

भोजनकालश्च —

उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः ।
लघुता क्षुत्पिपासा च यदा कालः स भोजने ॥

तच्चैकान्ते कर्तव्यम् ।

आहारं तु रहः कुर्यात् [2]निर्हारमपि सर्वदा ।
उभाभ्यां लक्ष्म्युपेतः स्यात् प्रकाशे ह्रियते श्रिया ॥

निर्हारो मलमूत्रोत्सर्गः ।

---

१. Bh. omits this line and insted of this reads टीका— ० चला १ । आंवली २ । उंबर ३ । थांवूल ४ । पाढराखैर ५ । काळा खैर ६ । वेळु ७ । अश्वत्थ ८ । पुन्नाग ९ । वट १० । पळस ११ । नांदरुरेख ११ । अगस्ता १३ । वेल १४ । अर्जुनवृक्ष १५ । वैकंकत १६ । अथवा कविंट १७ । बकुल १८ । लोखंडी १० । राळ २०. । वेतस २१ । फणस २२ । सई २३ । शमी २४ । कळम्ब २४ । आंवा २५ । निम्ब २७ । मोहा ।

२. $P_2$. नीहारमपि ।

तथा —

आहारनिर्हारविहारयोगाः
सदैव सद्भिर्विजने विधेयाः ।

## अथ भोजनभाजनानि ।

दोषहृत् दृष्टिकृत् पथ्यं हैमं भोजनभाजनम् ।
रौप्यं भवति चक्षुष्यं पित्तहृत् कफवातहृत् ॥

कांस्यं बुद्धिप्रदं रुच्यं रक्तपित्तप्रसादनम् ।
पैत्तलं वातकृद्रूक्षमुष्णं कृमिकफप्रणुत् ॥

आयसे काचपात्रे च भोजनं सिद्धिकारकम् ।
शोथपाण्डुहरं बल्यं कामलापहमुत्तमम् ॥

शैलजे मृन्मये पात्रे भोजनं श्रीनिवारणम् ।
दारूद्भवे विशेषेण रुचिदं श्लेष्मकारि च ॥

पात्रं पत्रमयं रुच्यं दीपनं विषपापनुत् ।
जलपात्रं तु ताम्रस्य तदभावे मृदो हितम् ॥

पवित्रं शीतलं पात्रं घटितं स्फटिकेन यत् ।
काचेन रचितं तद्वत् तथा वैडूर्यसम्भवम् ॥

## अथ पत्राणि ।

रम्भापत्रेऽशनं हृद्यं रुच्यं वृष्यं बलाग्निदम् ।
विषश्रमानिलास्रेषु हितं पाण्डौ न शस्यते ॥

पालाशपत्रे च मरुच्श्लेष्मगुल्मोदरप्रणुत् ।
कफवातं पीनसघ्नं रुच्यं श्रेष्ठं च बृंहणम् ॥

---

१, J¹, दृष्टिदं पथ्यं
२. bh. रुच्यं ।

क्षारोष्णकटुकं जन्तुकफघ्नं ज्वरशातनम् ।
शीतिकाज्वरहृत् पथ्यं हस्तिकर्ण्यां तु भोजनम् ॥

अर्कपत्रे भृशं रूक्षं कृमिघ्नं पित्तकृत्परम् ।
गुल्मशूलविषश्वासपाण्डुकुष्ठकफानिलान् ॥

हन्यात् परमचक्षुष्यं लघु दीपनपाचनम् ।
एरण्डपत्रं वातघ्नं क्रिमिघ्नं पित्तकृत् परम् ॥

पत्रेषु क्षीरवृक्षाणां तृष्णादाहास्रपित्तनुत् ।
पाण्डुशोथश्वाससोमरोगघ्नं पाटलाशनम् ॥

सर्वग्रन्थिविनाशाय केतकीपत्रभोजनम् ।
मनोहरं रुचिकरं चक्षुष्यं भोजनं लघु ॥

यात्रार्थिनामभिहितं वृष्यं क्लमहरं परम् ।
नलिने कुमुदे रक्तोत्पले वाथोत्पले दले ॥

भोजनं निन्दितं शीतं रूक्षं दौर्भाग्यमग्निनुत् ।

इति पत्राणि ।

---

भोजनादौ ब्रह्मादीन् स्मरेत् ।
तदुक्तं —

अन्नं ब्रह्मा रसो विष्णुर्भोक्ता देवो महेश्वरः ।
इति सञ्चिन्त्य भुञ्जानं दृष्टिदोषो न विद्यते ॥

अञ्जनागर्भसम्भूतं कुमारं ब्रह्मचारिणम् ।
दृष्टिदोषविनाशाय हनूमन्तं स्मराम्यहम् ॥

इति हनुमत्स्मरणमपि कुर्यात् ।

---

1 J1. पाण्डुशोफ ।

## अथ भोजनविधिः ।

भोजनाग्रे सदा पथ्यं लवणार्द्रकभोजनम् ।
अग्निसन्दीपनं रुच्यं जिह्वाकण्ठविशोधनम् ॥

लवणं सैन्धवम् ।

घृतपूर्वं समश्नीयात् कठिनं प्राक् ततो मृदु ।
अन्ते पुनर्द्रवाशी च बलारोग्ये न मुञ्चति ॥

तथा —

अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् ।
मध्येऽम्ललवणौ पश्चात् कटुतिक्तकषायकान् ॥

फलान्यादौ समश्नीयाद् दाडिमादीनि बुद्धिमान् ।
विना मोचाफलं तद्वद् वर्जनीया च कर्कटी ॥

मृणालबिसशालूककन्देक्षुप्रभृतीन्यपि ।
पूर्वमेव हि भोज्यानि न तु भुक्त्वा कदाचन ॥

अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ।
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ॥

सौमनस्यं बलं पुष्टिमुत्साहं रसनासुखम् ।
स्वादु सञ्जनयत्यन्नमस्वादु च विपर्ययम् ॥

अत्युष्णान्नं बलं हन्ति शीतं शुष्कं[1] च दुर्जरम् ।
अतिक्लिन्नं ग्लानिकरं युक्तियुक्तं[2] हि भोजनम् ॥

अतिद्रुताशिताहारो गुणान् दोषान्न विन्दति ।
भोज्यं शीतमहृद्यं च स्याद्विलम्बितमश्नतः ॥

नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ।
मन्दानलो नरो द्रव्यं मात्रागुरु विवर्जयेत् ॥

---

१. J1. T1. Bh. शुष्कं च ।
२. P2. भक्तियुक्तम् ।

स्वभावतश्च गुरु यत् तथा संस्कारतो गुरु ।
मात्रागुरुस्तु मुद्गादिर्माषादिः पच्यते गुरुः ॥

संस्कारगुरु पिष्टान्नं प्रोक्तमित्युपलक्षणम् ।
आहारं षड्विधं चोष्यं पेयं लेह्यं तथैव च ॥

भोज्यं भक्ष्यं तथा चर्व्यं गुरु विद्याद् यथोत्तरम् ।

चोष्यं इक्षुदाडिमादि, पेयं क्षीरादि, लेह्यं रसालादि, भोज्यं पोलिकादि, भक्ष्यं लड्डुकादि, चर्व्यं चिपिटादि ।

गुरूणामर्धसौहित्यं लघूनां तृप्तिरिष्यते ।

माषपिष्टान्नादिभिरर्धसौहित्यं कर्तव्यम् । मुद्गादिभिः स्वाभाविक्या मात्रया तृप्तिः कर्तव्येत्यर्थः ।

द्रवो द्रवोत्तरश्चापि न मात्रागुरुरिष्यते ।

द्रवः पेयादिः, द्रवोत्तरस्तक्राद्यधिकौदनादिः, मात्रातोऽधिकोऽपि चेन्न मात्रागुरुर्मन्तव्य इत्यर्थः ।

द्रवाढ्यमपि शुष्कं तु सम्यगेवोपपद्यते ।

विशुष्कमन्नमभ्यस्यं न पाकं साधु गच्छति ।
पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति ॥

शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् ।
पुनर्दानं पृथक् पानं सामिषं पयसा निशि ॥

दन्तच्छेदनमुष्णं च सप्त सक्तुषु वर्जयेत् ।
सक्तूनामाशु जीर्येत मृदुत्वादेव लेहिका ॥

आलस्यगौरवाटोपशब्दांश्च कुरुतेऽधिकम् ।
हीनमात्रं तनोः कार्श्यं करोति च बलक्षयम् ॥

अप्राप्तकाले भुञ्जानो ह्यसमर्थतनुर्नरः ।
तांस्तान् व्याधीनवाप्नोति मरणं चाधिगच्छति ॥

---

१. Bh. omits चोष्यं ...... पिबेदभूरि on l. 6 p. 218.

कालेऽतीतेऽश्नतो जन्तोर्वायुनोपहतेऽनले ।
कृच्छ्राद्विपच्यते भुक्तं न स्याद्भोक्तुं पुनः स्पृहा ॥
[1]रसेनान्नस्य रसना प्रथमेनोपतर्पिता ।
न तथास्वादमाप्नोति ततः शुद्धाम्बुमन्तरा ॥
अत्यम्बुपानान्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दोषः ।
तस्मान्नरो वह्निविवर्धनाय पुनः पुनर्वारि पिबेदभूरि ॥
भुक्तस्यादौ जलं पीतं कार्श्यमन्दाग्निदोषकृत् ।
मध्येऽग्निदीपनं शस्तमन्ते स्थौल्यकफप्रदम् ॥
तृषितस्तु न चाश्नीयात् क्षुधितो न पिबेज्जलम् ।
तृषितस्तु भवेद् गुल्मी क्षुधितस्तु जलोदरी ॥
कुर्यात् क्षीरान्तमाहारं न दध्यन्तं कदाचन ।

इति भोजनविधिः ।

[2]एवं भुक्त्वा समाचामेद् गण्डूषग्रहपूर्वकम् ।
भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् ॥
दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः ।
कुर्यादनिर्हृतं तद्धि मुखस्यानिष्टगन्धताम् ॥
दन्तलग्नमनिर्हार्यं लेपं मन्येत दन्तवत् ।
न तत्र बहुशः कुर्याद[3]न्ननिर्हरणं प्रति ॥
आचम्य जलयुक्ताभ्यां पाणिभ्यां चक्षुषी स्पृशेत् ।
भुक्त्वाचम्य स्मरेन्नित्यमगस्त्यादीन् सुखावहान् ॥
विष्णुरत्ता यथैवान्नं परिणामश्च वै यथा ।
सत्येन तेन मद्भुक्तं जीर्यत्वन्नमिदं तथा ॥
[4]अगस्तिरग्निर्वडवानलश्च भुक्तं ममान्नं जरयन्त्वशेषम् ।
सुखं च मे तत्परिणामसम्भवं यच्छत्वरोगं मम चापि देहम् ॥

---

१. T2 omits रसेना ... ... न्तरा ।
२. Bh. omits एवं ... ... ... अन्ननिर्हरणं प्रति ।
३. J1. T1. कुर्याद्यत्नं निर्हरणं प्रति ।
४. Bh. omits this verse.

अङ्गारकमगस्तिं च पावकं सूर्यमश्विनौ ।
यश्चैतान् संस्मरेन्नित्यं भुक्तं तस्याशु जीर्यते ॥

इत्युच्चार्य स्वहस्तेन परिमार्ज्य तथोदरम् ।
अनायासप्रदायीनि कुर्यात् कर्माण्यतन्द्रितः ॥

जाग्रन्नित्यर्थः । यतः —

भुक्तमात्रस्य तु स्वप्नात् हन्त्यग्निं कुपितः कफः ।
धूमेनापोह्य हृद्यर्वाक् कषायकटुतिक्तकैः ॥

पूगकर्पूरकस्तूरीलवङ्गसुमनःफलैः ।
फलैः कटुकषायैर्वा मुखवैशद्यकारिभिः ॥

ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ।
भुक्त्वा शतं पदं गच्छेच्छनैः स्वस्थोऽभिजायते ॥

भुक्त्वा शतपदीं गच्छेच्छनैस्तेन तु जायते ।
अन्नसङ्घातशैथिल्यग्रीवाजानुकटीसुखम् ॥

रते सुप्तोत्थिते स्नाते भुक्ते वान्ते च सङ्गरे ।
सभायां विदुषां राज्ञां कुर्यात्ताम्बूलचर्वणम् ॥

## अथ ताम्बूलविधिः ।

तद्गुणाश्च —

ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं
वातघ्नं क्रिमिनाशनं कफहरं कामाग्निसन्दीपनम् ।
स्त्रीणां भाषणभूषणं रतिकरं शोकस्य विच्छेदनं
ताम्बूले विदितास्त्रयोदश गुणाः स्वप्नेऽपि ते दुर्लभाः ॥

अन्यत्रेति शेषः ।

आयुरग्रे यशो मूले लक्ष्मीर्मध्ये व्यवस्थिता ।
तस्मादग्रं तथा मूलं मध्यं पर्णस्य वर्जयेत् ॥

---

१. Bh omitss फलैः ... ... कटीसुखम् ।

२. Bh. reads this verse after भूपानां भोजनविधिः and omits ताम्बूलं ... ... अन्यत्रेति शेषः ।

पर्णमूले भवेद् व्याधिः पर्णाग्रे पापसम्भवः ।
चूर्णपर्णं हरेदायुः शिरा बुद्धिविनाशिनी ॥

आद्यं विषोपमं पीतं द्वितीयं भेदि दुर्जरम् ।
तृतीयादि तु पातव्यं सुधातुल्यं रसायनम् ॥

विद्याकामोऽनिशं रात्रौ ताम्बूलं नैव भक्षयेत् ।

तथा —

ताम्बूलं नातिसेवेत न विरिक्तो बुभुक्षितः ॥

क्षतास्रपित्ती क्षीराशी क्षीणो रूक्ष्यक्षिरोग्यपि ।
विषमूर्च्छोपवासार्तो मेही पाण्ड्वामयी क्षयी ॥

भूतापस्मारकुष्ठातिसारी कृच्छ्री च हृद्रदी ।
विना चूर्णं विना पर्णं पूगं खादति यो नरः ॥

दशजन्मदरिद्रस्तु मरणे न हरिं[1] स्मरेत् ।
क्रमुकं पञ्चनिष्कं स्यात् ताम्बूल्याश्च पलद्वयम् ॥

गुञ्जाद्वयं चूर्णमानं ताम्बूलक्रम उत्तमः ।

तथा—

फलपत्रे समे रागो विरागस्तु फलाधिके ॥
चूर्णाधिक्ये तु दौर्गन्ध्यं पत्राधिक्ये[2] सुगन्धिता ।
रात्रौ च पर्णबहुलं ताम्बूलं भक्षयेन्नरः ॥

जातीलवङ्गकर्पूरतक्कोलकटुकैस्सह ।
रुचिवैशद्यसौगन्ध्यमिच्छन् वक्त्रेण धारयेत् ॥

ताम्बूलमिति[3] शेषः । ताम्बूलातियोगे —

पाण्डुत्वं तनुदौर्बल्यमक्षिरोगं बलक्षयम् ।
करोति चोष्णरोगाख्यं ताम्बूलमतिसेवनात् ॥

इति ताम्बूलविधिः ।

---

१. $J_1$. हरिस्मृतिः ।

२. $J_1$. omits पत्राधिक्ये ... ... रुचिवैशद्यसौगन्ध्यं ।

३. $J^1$. omits ताम्बूलमिति शेषः ।

भुक्त्वोपविशतस्तुन्दं शयानस्य तु पुष्टता ।
आयुश्चङ्क्रममाणस्य मृत्युर्धावति धावतः ॥

श्वासानष्टौ समुत्तानस्तान् द्विः पार्श्वे तु दक्षिणे ।
ततस्तद्द्विगुणान् वामे पश्चात् स्वप्याद्यथासुखम् ॥

वामदिशायामनलो नाभेरूर्ध्वेऽस्ति जन्तूनाम् ।
तस्मात्तु वामपार्श्वे शयीत भुक्तस्य पाकार्थम् ॥

सद्योमांसं नवं चान्नं बाला स्त्री क्षीरभोजनम् ।
घृतमुष्णोदकस्नानं सद्यः प्राणकराणि षट् ॥

पूतिमांसं स्त्रियो वृद्धाः बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥

बालार्कः कन्यास्थार्कः । प्राणो बलम् ।

स्नानं सशर्करं क्षीरं भक्ष्यमैक्षवसंस्कृतम् ।
वाता मांसरसाः स्वप्नो व्यवायान्ते हिता अमी ॥

## अथ मर्दनप्रतीकारः ।[1]

यो लेढि शयनसमये मधुमिश्रबीजपूरदलचूर्णम् ।
स व्रीडाकरवातप्रसरनिरोधात् सुखं स्वपिति ॥

विशेषं अवसरे प्रदर्शयिष्यामः ।
सुषेणाक्तः कथ्यतेऽथ भूपानां भोजने विधिः ।
यथासम्भवमन्येषामप्ययं सम्भविष्यति ॥[2]

---

१. J1. omits अथ मर्दनप्रकारः ।

२. J1. reads the colophon इत्थं विमथ्य ... ... द्रव्यगुणा-गुणकथनम् ।

स्नानं विधाय विधिवत् कृतदेवकार्यः
सन्तर्पितातिथिजनः सुजनैः सुकार्यैः ।
आप्तैर्नृपो रहसि भोजनकृत्तथा स्यात्
सायं यथा भवति भुक्तिकरोऽभिलाषः ॥

नित्याचारपवित्रनिर्मलतनुर्धौतप्रसन्नाम्बरो
हृद्यो भोजनवेश्मनि स्थिरतरे मृद्वासने संविशन् ।
पुत्रैस्सन्निधिभिस्ततः परिजनैराप्तैर्वृतः सद्वशैः
सद्वंश्यैश्च नियोगिभिः सुचरितैस्तन्त्रोपयुक्तैर्नृपः ॥

आजानु स्थापनीयं कनकमयमथो रौप्यमग्रे सुपात्रं
स्फारं तस्योपरिष्टात् कनकविरचिताः पत्रिका मण्डलिन्यः ।
भक्तं सोष्णं सबाष्पं शशिकरधवलं कुन्दिकाकुड्मलाभं
मध्ये स्थाप्यं ससूप्यं सुरसुरभि घृतं दक्षिणे स्वर्णपात्रे ॥

भृष्टं तैलादिपक्वं बहुविधरचनाकल्पितं तत्प्रकारै-
रन्यौन्यं साभिमानैस्तदपि च सहितं जाङ्गलानूपमांसैः ।
दद्यात् तत्रैव पार्श्वे सुरभि रुचिकरं दक्षिणे वामभागे
लेह्यं चोष्यं च पेयं भवति सुविहितो भक्ष्यवर्गः पुरस्तात् ॥

तथा घृतं च सूप्यं चाप्येकीकुर्याद् यथा पिबेत् ।
घृतेन संप्लुतं ह्यन्नं पाचनं सुखकारि च ॥

क्षीरायणो निशि निमिः पुनरस्तकाले
मध्यन्दिने च धिषणश्चरकः प्रभाते ।
भुक्तिं जगाद नृपतेर्मम चैष सर्ग-
स्तस्याः स एव समयः क्षुधितो यदैव ॥

यः क्षुधालौल्यभावेन कुर्यादाकण्ठभोजनम् ।
सुप्तव्यालानिव व्याधीन् सोऽनर्थाय प्रबोधयेत् ॥

यः काकवद् दिवाकामः स नक्तं भोक्तुमर्हति ।
स भोक्ता वासरे यः स्यात् रात्रौरेताश्चकोरवत् ॥

देवार्चां भोजनं निद्रां प्रकाशे न प्रकल्पयेत् ।
नान्धकारे न सन्ध्यायां नाविताने निकेतने ॥

भुक्ते स्वापे मलोत्सर्गे यत्सम्बाधासमाकुलः ।
निश्शङ्करंवात्ययात् तस्य के के न स्युर्महामयाः ॥

विवर्णास्त्रिन्नविक्लिन्नविगन्धविरसं स्थितम् ।
अतिजीर्णमसात्म्यं च नाद्यादन्नं न चाविलम् ॥

कामकोपातपायासयानवाहनवह्नयः ।
सद्योभुक्तवता सेव्या न जातु हितमिच्छता ॥

हितं परिमितं पक्वं नेत्रनासारसाप्रियम् ।
रसा रसना ।
परीक्षितं च भुञ्जीत न द्रुतं न विलम्बितम् ॥

अत्यशनं चाध्यशनं ह्यनशनमहिताशनं च सन्त्याज्यम् ।
कुर्याद्यथोक्तमशनं बलजीवितपेशलं क्रमशः ॥

आदौ स्वादु स्निग्धं तन्मध्ये लवणमम्लमुपयोज्यम् ।
रूक्षं द्रवं पश्चान्न च भुक्त्वा भक्षयेत् किञ्चित् ॥

मन्दस्तीक्ष्णो विषमः समश्च वह्निश्चतुर्विधः पुंसाम् ।
लघुमन्दे गुरुतीक्ष्णे स्निग्धं विषमे समं समे च स्यात् ॥

ध्वाङ्क्षः स्वरान्विकुरुतेऽत्र पिकात्मजश्च
बभ्रुश्शिखण्डितनयश्च भवेत्प्रहृष्टः ।
क्रौञ्चः प्रमोदति विरौति च ताम्रचूडः
छर्दिं शुकः प्रतनुते निहते कपिश्च ॥

---

१ T1. Bh. भुक्तौ स्वापे ।
२. Bh. omits विवर्णा ........................ न विलम्बितम् ।
३. J1, T1, Bh अत्यशनमध्यशनमनशनमशनं च तत्र संत्याज्यम् ।
४. भोज्यं पश्चात् ।
५. Bh. omits this vsrse.

विरज्येते चकोरस्य लोचने विषदर्शनात् ।
गतौ स्खलति हंसश्च लीयन्तेऽत्र न मक्षिकाः ॥

यथा लवणसम्पर्कात् सद्यः स्पन्दति पावकः ।
विषदुष्टान्नसम्पर्कात् तथा वसुमती पदा ॥ इति ।

पुनरुष्णीकृतं सर्वं सर्वं धान्यं विरूढकम् ।
दशरात्रोषितं नाद्यात् कांस्येऽत्र निहितं घृतम् ॥

दधितक्राभ्यां कदलं क्षीरं लवणेन शष्कुली कथिता ।
गुडपिप्पलिमधुमरिचैः सार्धं सेव्या न काचमाची च ॥

भुञ्जीत माषसूपं मूलकसहितं न जातु हितकामः ।
दध्ना पर्युषितं नाद्यात् विशुष्कं पयसा न च ।
केशकीटकसंसृष्टं पुनरार्द्रं च वर्जयेत् ॥

भोजनादौ सदा वायुः प्रकुप्यत्यनिलो महान् ।
घृतप्लुतेन चान्नेन तस्मात्तं तर्पयेद् घृतम् ॥

घृतादिपक्वं मधुरं च सर्वं
द्रवप्रधानं प्रथमं विदध्यात् ।
ततः परं भोजनमामनन्ति
कट्वम्लयुक्तं मधुरं च पथ्यम् ॥

तिक्तं कषायं कटुकं तथान्ते
भुञ्जीत सर्वं सुबहु द्रवं च ।
एवं हि कुर्वन् नृपतिः सदैव
दीर्घायुरारोग्यतनुश्च भूयात् ॥

१. Bh. विषदुष्टान्न ।
२. J1, T1, Bh. वसुमतीपते । and Bh. omits पुनरुष्णी ......... विशेषतोपि on l. 2. p. 226.
३. J1, T1. तर्पयेद् द्वयम् ।
४. J1. मादिशन्ति ।

कश्चिद्वायुं शमयति रसः कोऽपि पित्तं करोति
कश्चिच्छ्लेष्मं(?) शमयतितरां कोपि पित्तप्रकोपी ।
कश्चित्पित्तप्रचयशमनः कोपि तत्कोपकारी
नित्यं तस्मात्सकलरसभुग् भूपतिः स्याच्चिरायुः ॥

यस्मिन्नृतौ ये च रसा बलिष्ठाः
सेव्यास्तु ते तत्र विशेषतोऽपि ।
अन्नं विशेषान्न च सर्वदैव
भोज्यं नृपेणैकरसं बुधेन ॥

पिबेज्जलं शीततरं हि हृद्यं
हृत्कण्ठशुद्धिर्भवति स्वराणाम् ।
... ... ... ...
... ... .... ॥ १

एकं व्यञ्जनमासाद्य ततः प्रक्षालयेद् भृशम् ।
करं च पुनरन्यच्च भुञ्जीत नृपतिः सुखम् ॥

एवमन्नं हि भुञ्जानः स्वादुत्वं जनयेद् भृशम् ।
पुष्टिं च महतीं कुर्याद् विचित्रविधिना कृतम् ॥

पानीयपात्राणि सुशीतलानि
सुवर्णरूप्यादिविनिर्मितानि ।
सुधूतवस्त्रैरपि वेष्टितानि
वामे निधेयान्यपि दक्षिणे च ॥

एतद् गृहद्वयं कार्यं वामदक्षिणपार्श्वयोः ।
चकोरशिखिहंसादीन् पक्षिणो विनिवेशयेत् ॥

शृङ्गारवीरसम्बद्धाः शृणुयाद् यः कथाः शुभाः ।
तेन हर्षो भवेत्तस्य भुञ्जानस्य महीपतेः ॥

भुञ्जानो न बहु ब्रूयादेतन्नान्यच्च किञ्चन ।
जुगुप्सितां कथां चैव न ब्रूयाच्छृणुयाच्च ताम् ॥

लेह्यभक्ष्यादिकं सर्वं भुक्त्वान्नं तु यथासुखम् ।
शेषं मांसरसं पीत्वा क्षीरं वा तक्रमेव वा ॥

ततो रूक्षकवोष्णेन जलेन क्षालनं तथा ।
गण्डूषान् शीतलान् कुर्याच्चन्दनागरुकल्पितान् ॥

गण्डूषैर्बहुभिः सुशोभितमुखं श्रीचन्दनेनोन्मितै-
धूपेनाथ सुगन्धिना च वदनं घ्राणं करौ धूपयेत् ।
मृद्नीयात्तदनु प्रसन्नसुरभिः श्रीचन्दनेनैव तौ
पाणी वक्त्रमपि प्रसन्नविलसत्कर्पूरगर्भं मुदा ॥

ततः प्रसन्नेन्द्रियचित्तवृत्तिरुत्क्रामयित्वा च शतं पदानि ।
सुकोमले कल्पितचारुतल्पे सुखं विशेद् वामकटिर्नरेन्द्रः ॥

विदग्धाभिस्सह स्त्रीभिस्तिष्ठेद् गोष्ठीः समाचरन् ।
निद्रासात्म्योऽथवा निद्रां नृपः कुर्याद्यथाविधि ॥

अम्लेन केचिद्विहिता मनुष्या माधुर्ययोगेन भवन्ति चान्ये ।
तथाम्लयोगे मधुरेण तृप्तास्तेषां यथेष्टं प्रवदन्ति पथ्यम् ॥

शीतोष्णतोयासवमद्ययूषफलाम्लधान्याम्लपयोरसानाम् ।
यस्यानुपानं विहितं भवेद्यत्तस्मै प्रदेयं सह मात्रया तत् ॥

व्याधिं च कालं च विभाव्य वैद्यैर्देयानि भोज्यानि च तानि तानि ।
सर्वानुपानान्तुरसं वदन्ति मेध्यं यदम्भः शुचिभाजनस्थम् ॥

लोकस्य जन्मप्रभृति प्रसात्म्यं ये यान्ति तान्सर्वरसांश्च मृष्टान् ।
संक्षेप एषो विहितोऽनुपानेष्वन्यैश्च तैर्विस्तरितं समस्तम् ॥

इति ।

विष्णुपुराणे —

भुञ्जीत हृतसाराणि न कदाचिन्नरेश्वरः ।

इति ।

---

१. J1. प्रशस्तं ।
२. J1. adds — मया सुषेणेन कृतं हिताय प्राणप्रसादं जनयेत शीघ्रम् ।

अथावसरप्राप्तो राज्ञां ताम्बूलविधिः ।

कर्पूरकङ्कोललवङ्गपूग-
जातीफलैर्नागरखण्डपर्णैः ।
सुधाश्मचूर्णं खदिरस्य सारं
कस्तूरिकाचन्दनचूर्णमिश्रम् ॥

ताम्बूलमेतत् प्रवदन्ति राज्ञः ।
सौभाग्यदं कान्तिसुखप्रदं च ।
ताम्बूलपत्राणि हरन्ति वातं
पूगीफलं हन्ति कफं सुवृद्धम् ॥

चूर्णं निहन्यात् कफवातमुच्चै-
र्हन्याच्च पित्तं खदिरस्य सारः ।
इत्थं हि ताम्बूलमुदाहरन्ति
दोषत्रयस्यापि निवारणाय ॥

भुक्त्वान्नं सलिलं पीत्वा गृहीत्वा बहु भेषजम् ।
प्रतीक्ष्य घटिकामेकां ताम्बूलं भक्षयेन्नरः ॥

वातश्लेष्मप्रशमनं हृद्यं वह्नेः प्रदीपनम् ।
मुखवैरस्यहरणं कङ्कोलं भुक्तपाचनम् ॥

रसे कटु श्रेष्ठ मजीर्णनाशनं
निहन्ति शुक्रं कुरुते च पित्तम् ।
कङ्कोलजातीफलवल्लवङ्गं
विशेषतश्छर्दिहरं विषघ्नम् ॥

स्वरक्षये वापि मुखस्य पाके-
ऽप्यजीर्णबाधासु च पथ्यमेतत् ।
एलाद्वयं छर्दिषु मूत्रकृच्छ्रे
मन्देऽनले पथ्यमरोचके च ॥

---

१. $J_1$. $T_1$. शुद्धाश्मचूर्णम् ।

२. Bh. omits ताम्बूलपत्राणि .... .... ... .... .... लक्ष्मीसौभाग्यवर्धनः ; on P. 228

स्वादुः सुशीतो मधुरश्च पाके-
ऽप्यरोचकं हन्ति च जातिकोशः ।
ताम्बूलयोग्यं क्रमुकं च तज्ज्ञाः
मासत्रयादूर्ध्वमुदाहरन्ति ॥
मासे व्यतीते तु भवन्ति चूर्णा-
न्यतीव हृद्यानि मनोहराणि ।
.... .... .... .... ... .... ....
... ... ... ... ... ... ... (१)
तीक्ष्णोष्णः परिणामशीतलतरः कण्डूप्रमेहापहो
नानास्थानजलाधिकक्रिमिहरस्तृड्दहपाकं जयेत् ।
श्लेष्मघ्नश्च गलग्रहापहरणः संसुप्तजिह्वाग्रजित्
कर्पूरः खलु दिव्यसौरभगुणः पोताश्रयः स्फाटिकः ॥
गलग्रहे सुप्तजिह्वे लालास्रावे जलाधिके ।
श्लेष्ममेहक्रिमीन् हन्ति कर्पूरश्चायुषः परः ॥
कर्पूरः कफसम्भेदी तीक्ष्णोष्णः शीतलः परः ।
प्रमेहतृड्विदाहघ्नो लक्ष्मीसौभाग्यवर्धनः ॥

इति सुषेणोक्तस्ताम्बूलविधिः ।

अथानुलेपनम् ।

तत्र चन्दनगुणाः—

चन्दनं रक्तपित्तघ्नं दाहमूर्च्छातिसारनुत् ।
शीतलं श्लेष्मलं हृद्यं किञ्चिद्वातप्रकोपनम् ॥

कृष्णागरोः

शीतः पित्तविनाशनः सुमधुरः किञ्चित् सतिक्तस्तथा
कण्डूशोफविषापहः क्रिमिहरः सौभाग्यकान्तिप्रदः ।
सौगन्ध्यं कुरुते किमप्यभिनवं गात्रेषु पुष्टिप्रदः
सन्तोषं विदधाति चेतसि परं स्निग्धश्च कृष्णागरुः ॥

---

१. $J_1$. adds कस्तूर्यादिगुणाः पूर्वमेवोक्ताः before अथ and etc.

## अथ उपभोगार्हवस्त्रगुणः।

श्वेतं दुकूलं मज्जासृगोजोबलविवर्धनम्।
कफकृत्पित्तशमनं श्रमतृड्दाहनाशनम्॥

माञ्जिष्ठं दाहकृच्चोष्णं कफवातानुलामनम्।
पट्टसूत्रमयं वस्त्रं त्रिदोषश(मं ? मनं) विदुः॥

श्वेतं दुकूलं बलकृत् पित्तशान्तिकरं परम्।
ओजस्तेजोवीर्यकरं रतिकान्तिविवर्धनम्॥

तृष्णाशोषविभेदनं धृतिकरं कान्तिप्रदं श्लेष्मलं
क्षौमं शुक्लमतीव हृद्यममलं पित्तामयध्वंसनम्।
माञ्जिष्ठं च विदाहिकं च कफकृच्चोष्णं च वातामय-
ध्वंसार्हं रुचिरं सुखं च कुरुते श्लेष्मापहं च स्मृतम्॥

इत्युपभोग्यवस्त्रगुणाः।

इत्थं विमथ्य गुणपाठसुधाम्बुराशिं
लब्ध्वा परामृतरसं सुरसं च तस्मात्।
निर्मायि भोजनकुतूहलमीश्वराणां
तोषाय तेन परितुष्यतु शेषशायी॥

संसेविता न गुरवस्तरवश्च दृष्टा
यैर्न क्षितौ जनपदेषु च तेषु तेषु।
भैषज्यतन्त्रमपि नैव कृतं स्वतन्त्रं
तेषां कृतेऽपि च कृतं रघुनाथनाम्ना॥

अनन्तदेवान्मनसा विधायाप्यनन्तदेवस्य विधाय सेवाम्।
योऽनन्तदेवः प्रथितः पृथिव्यामनन्तदेवः परितोषमेतु॥

इति श्रीमद्विद्वद्वृन्दवन्द्यपादारविन्दश्रीमदनन्तदेवदयोदयस्य
रघुनाथविदुषः कृतौ भोजनकुतूहले
द्रव्यगुणागुणकथनं नाम प्रथमः परिच्छेदः॥

भो षट्पदाः कृतधियः शृणुतामलां नो
वाचं विविच्य विभवाय चिरप्रसूताम् ।
संसेवयन्तु विमलं कमलान्तरङ्ग-
मेनं रसं न रसितुं प्रभवन्तु भेकाः ॥

यदि पूतिगन्धबहले वारिणि बद्धादरः पोत्री ।
स्पृहयति वारि न गाङ्गं गुरु गीर्वाणैरपाकृतं किं स्यात् ॥

---

# विषयानुक्रमणी।

विषयः पृष्ठम्

# भोजनकुतूहले प्रथमपरिच्छेदस्य श्लोकार्धानुक्रमणी ।

1081

## APPENDIX II.

### भोजनकुतूहले प्रथमपरिच्छेदे स्मृतानां ग्रन्थानां सूची ।

---



---

## GLOSSARY OF MAHRATTI TERMS

### I. FOOD STUFFS, DRUGS Etc.*

| Mahratti | English | Malayalam | Tamil | Page |
|---|---|---|---|---|
| अकरोटें | Walnut | മലയുകഫലം | அக்குரோடு | 102 |
| अनानस | Pine apple | പൃത്തിച്ചക്ക | அன்னாசி | 93 |
| अमृतफल | The fruit of Amrita | അമൃതിൻകായ് | அமிருத பழம் | 94 |
| अम्बे हलदी | Zedoary | ചെറുകച്ചോലം | சிறு கச்சோலம் | 65 |
| अम्लवेतस | Common sorrel | ഞെരിഞ്ഞാംപുളി | புளிவஞ்சி | 96 |
| अलिता | Shell-lac | അരക്ക് | அரக்கு | 117 |
| अहीर | Eel | വ്ളാങ്ക് | விலாங்கு மீன் | 173 |
| अळू | Alocasia antiquorum | ചേമ്പ് | சேப்பங்கிழங்கு | 76 |
| आटुकलवण | Corbonate of soda | ഉവരുപ്പ് | பூநீறு | 117 |
| आंवट वेलि | Wild citron tree | കാട്ടുമാതളനാരകം | காட்டுமாதுளை | 70 |
| आबाडे | Indian sorrel | പുളിയാരൽ | புளியாரை | 112 |

*In the preparation of this Glossary the *Oṣadhinighaṇṭu* (Malayalam) by Kumaran Krishnan, the *Bhāvaprakāśanighaṇṭu* of Bhāvamiśra (edited in the Banares Sanskrit Series) and the *Mahratti-English Dictionary* by J. T. Molesworth, have been liberally utilised.

## Glossary I—(contd.)

| Mahratti | English | Malayalam | Tamil | Page |
|---|---|---|---|---|
| आविला | A small fish with a white body and red fins | വെളുത്ത ശരീരത്തോടും ചുവന്ന ചിറകുകളോടും കൂടിയ ഒരുതരം ചെറിയ മത്സ്യം | வெள்ளை உடலும் சிவந்த சிறகுகளும் உள்ள ஒரு வகை மீன் | 174 |
| आम्वाडा | Spondias minute | അമ്പഴം | ஒருவகை மரம் | 71 |
| आम्बाडे | A kind of Mango | കരുത്തമാങ്ങാ | ஒருவகை மாங்காய் | 98 |
| आम्वाडेल | Oil of the "आम्वाडा" seeds | കരുത്തമാങ്ങേ എണ്ണ | ஒருவகை மாங்காய் எண்ணை | 154 |
| आर्द्रमरीच | Black pepper | കുരുമുളക് | மிளகு | 99 |
| आलमास | A kind of white fish | ഒരുതരം വെളുത്ത മത്സ്യം | ஒருவகை வெள்ளைமீன் | 174 |
| आले | Ginger root | ഇഞ്ചി | இஞ்சி | 65 |
| आवला | Emblic-myrobalan | നെല്ലി | நெல்லி | 97,113 |
| आवांती | Indian sorrel | പുളിയാരൽ | புளியாரை | 69 |
| उंत्तती | Date palm | ഈന്ത (ഈന്ത) | ஈச்ச மரம் | 91 |
| उम्बरे | The fruit of the keg tree | അത്തിയാലിൻപഴം | அத்திப்பழம் | 89 |
| उष्ट्री | She-camel | പെൺഒട്ടകം | பெண் ஒட்டகம் | 150 |

| | | | | |
|---|---|---|---|---|
| एडकी | She-ram | വലിയ കൊമ്പുള്ള പെണ്ണാട് | ஒருவகை பெண்ஆடு | 148 |
| एरण्डतैल | Castor oil | ആവണക്കെണ്ണ | ஆவணக்கெண்ணை | 152 |
| एरण्डफल | The fruit of the castor plant | ആവണക്കിൻകുരു | ஆவணக்கு விதை | 99 |
| एला | Small cardamom | ചിറ്റേലം | சிறு எலம் | 115 |
| कचोरा | A species of Zedoary | കച്ചോലം | கச்சோலம் | 65 |
| कचोरा घोर | A species of Zedoary | നറുമഞ്ഞൾ | நறு மஞ்சள் | 65 |
| कटकेली | Wild plantain | മരവാഴ | மரவாழை | 88 |
| कडु तोण्डली | Bryonia grandis | കൈപ്പൻകോവ (കാട്ടുകോവ) | கசப்புக் கோவல் | 84 |
| कडु हुञ्जी | A variety of hairy Mordica | നെയ്പ്പാവൽ | நெய்ப்பாவல் (மெதுபாவல்) | 85 |
| कढोंची | Panioum brizoides | കുതിരവാലി | குதிரைவாலி | 114 |
| कदलीकन्द | Pith of the plantain | വാഴപ്പിണ്ടി | வாழைத்தண்டு | 62 |
| कमरख | Carambola | വൈരപ്പുളി, ആരൽപുളി, ഇലിംപ | | 93 |
| काञ्जतैल | Oil of smooth-leaved Ponginia | ഉങ്ങെണ്ണ | புங்கு நெய் | 152 |
| करटोली | A kind of gourd, Momordica charantia | കരുള്ളപാവൽ | மெதுபாவல் | 85 |

Glossary I—(contd.)

| Mahratti | English | Malayalam | Tamil | Page |
|---|---|---|---|---|
| करवंदें | Jasmine flowered Carisa | പെരുങ്കളാവ് | பெருங்களா | 89 |
| करेपक | Muraya korniji | കരിവേപ്പ് (കറിവേപ്പ്) | கருவேப்பிலை | 73 |
| कर्पूर | Camphor | കർപ്പൂരം | கர்ப்பூரம் | 119 |
| कलम्बी | Red Malabar night-shade | വലിയ വശളച്ചീര | கொடிவசளைக்கீரை | 75 |
| कलिङ्गडे | Water melon | തണ്ണിമത്ത (കുമ്മട്ടി) | சர்க்கரை கும்மட்டி | 80 |
| कविठेल | Oil of the Wood-apple or Elephant-apple | വ്ളാ(വിളാവ്) എണ്ണ | விளாங்காய் எண்ணெய் | 155 |
| कवीठ | Wood-apple, Elephant-apple | വ്ളാ (വിളാവ്) | விளாமரம் | 97 |
| कसेरु | A kind of grass, Cyperus rotundus | മുത്തങ്ങാ | முத்தக்காசு | 65 |
| कस्तूरी | Musk | കസ്തൂരി | கத்தூரி, மிருகமதம் | 118 |
| काकडी | A variety of Cucumber | വലിയവെള്ളരി (ആറാംവെള്ളരി) | வெள்ளரி | 78 |
| काकडे | Mormordica Cochinchinensis | കക്കരിക്കാ | கக்கரிக்காய் | 98 |

| | | | | |
|---|---|---|---|---|
| काञ्जी | Sour gruel | കാഞ്ഞി | காடி | 122 |
| काव्या ऊंस | White Sugarcane | വെള്ളക്കരിമ്പ് | வெள்ளைக் கரும்பு | 155 |
| काण्टे गहूं | A kind of Wheat | ഒരുതരം ഗോതമ്പ് | ஒருவகை கோதுமை | 8 |
| काण्डवेलि | Heliotropium Indicum | പണ്ണംപുറണ്ട | பிரண்டை | 106 |
| काण्डेतरवटा | A variety of oval-leaved Cassia | ഒരുതരം തകര | ஒருவகை தகரை | 72 |
| कानवसा | A kind of fish | ഒരുതരം മീൻ | ஒருவகை மீன் | 174 |
| कापूरचिणी | Cubeb Pepper | തക്കോലം | தக்கோலம் | 120 |
| कापूरेल | Essential oil of Camphor | കർപ്പൂരതൈലം | கர்ப்பூரதைலம் | 154 |
| कामोणी | Night-shade | മണിത്തക്കാളി | கருந்தக்காளி (மணத்தக்காளி) | 71 |
| कारली | A variety of hairy Mordica | പാവക്കാ | பாவக்காய் | 85 |
| कारवल्ली | ” | ചെറുപാവക്കാ | மெதுபாவக்காய் | 114 |
| कारीशाक | A little thorny plant bearing a white nectareous flower | വഴിയുരകം | மயிர்மாணிக்கம் | 74 |
| कविठफूल | The flower of the Wood-apple | വ്ളാവിൻപൂ | விளாம்பூ | 107 |

## Glossary I—(contd.)

| Mahratti | English | Malayalam | Tamil | Page |
|---|---|---|---|---|
| काष्ठावला | A kind of Emblic myrobalan | ഒരുതരം നെല്ലിക്കാ | ஒருவகை நெல்லிக்காய் | 97 |
| कासघदा | The Negro coffee (Round-podded Cassia) | പൊന്നാവീരം | பொன்னாவிரை | 72 |
| कासाळू | A large variety of Callodium | കണ്ണൻചേമ്പ് | ஒருவகை சேப்பங்கிழங்கு | 62 |
| काळकेली | A kind of Banana | കരിങ്കദളിവാഴ | ஒருவகை வாழை | 88 |
| काळा ऊंस | A kind of Sugar-cane | നീലക്കരിമ്പ് | ஒருவகை கரும்பு | 156 |
| कुङ्कमकेसर | Saffron | കുങ്കുമപ്പൂ | குங்குமப்பூ | 117 |
| कुडिर | A kind of leafy vegetable | കാട്ടുചീര | காட்டுக்கீரை | 68 |
| कुम्भा | Leucas linifolia | തുമ്പ | தும்பை | 73 |
| कूरडू | Blepharis edulis | നീരാരൽ | ஆரைக்கீரை | 71 |

| | | | | |
|---|---|---|---|---|
| कुरी | A kind of Corn | കരിധാന്യം | ஒருவகை தானியம் | 20 |
| कुसुम्भशाक | The leaf of the Safflower (officinal carthamus) | കയ്യംപിൻ ശാകം | குசும்பத்தின் இலை | 68 |
| कुसुम्भे | Safflower | കയ്യംപ | குசும்பவிதை | 18 |
| कुहिरीद्वय | Cowhage and cowitch | നായ്ക്കുരണയും പഴിയ കാക്കത്തൊണ്ടിയും | பூனைக்காலியும் சிறுகோவையும் | 18 |
| कुहीं | Ewe | പെൺആട് | பெண் ஆடு | 81 |
| कृष्णशिरस | Black Mustard. | കരിങ്കടുക് | கறுப்புக்கடுகு | 18 |
| केना | An esculant grass | കേനാ | ஒருவகை மருந்துச்செடி | 76 |
| कोथिम्बीर | Coriander seeds | കൊത്തംപാലരി | மல்லிவிதை | 73 |
| कोळकन्द | A kind of edible root | പുടകന്ദം | ஒருவகை கிழங்கு | 63 |
| क्षुद्रवदरम् | A kind of Plum | ചെറിയലന്ത | இலந்தை | 94 |
| क्षुद्रवेली | A kind of Basella | ഒരുതരം വശളച്ചീര | ஒருவகை வசலக்கீரை | 67 |
| खडशिम्बी | Black-seeded Dolichas | പെരുമൊച്ചിപ്പയറ | ஒருவகை மொச்சக்கொட்டை | 81 |
| खण्डतवराज | Sugar candy | ഒരുതരം കല്ക്കണ്ട് | ஒருவகை கர்க்கண்டு | 165 |
| खरी | Mule | പെൺകഴുത | பெண்கழுதை | 150 |

*Glossary I – (contd.)*

| Mahratti | English | Malayalam | Tamil | Page |
|---|---|---|---|---|
| खरोस | The first week's milk of a cow | പശു പ്രസവിച്ചു 7 ദിവസം വരെയുള്ളപാൽ | கன்றுபோட்டு ஏழுநாள் வரையிலுள்ள பசுவின் பால் | 127 |
| खजूर | Wild Date | ഒരുതരം ഈന്തപ്പഴം | ஒருவகை ஈச்சம்பழம் | 92 |
| खर्बूज | Melon | ഒരുതരം വരിയൻകക്കരി | பறங்கிக்காய் | 80 |
| खसखसेल | Oil of Poppy seeds | കശകശഎണ്ണ | கசகசாவின் எண்ணெ | 154 |
| खिरणी | Obtuse-leaved Mimusops | പഴമുൺപാല | பழமுண்ணிப்பாலை (தீம் பாலை) | 97 |
| खोबरेल | Cocoanut-oil | വെളിച്ചെണ്ണ | தேங்காய் எண்ணெ | 154 |
| खोबरें | Dry cocoanut kernel | കൊപ്രേ | கொப்பறைதேங்காய் | 91 |
| गाजरमूळ | Carrot-root | മഞ്ഞമുള്ളങ്കി | காஜர்கிழங்கு, மஞ்சள்முள்ளங்கி, காட்டுக்கிழங்கு | 60 |
| गामस | Pimelodus gagora | ഒരുതരം മത്സ്യം (ശസ്ത്രമത്സ്യം) | ஒருவகைமீன் | 173 |
| गुडगुडा | Slightly saline sugar | ഒരുതരം ശക്കര | அச்சுவெல்லம் | 163 |
| गोडतोण्डली | Large-flowered Bryonia | തൊണ്ടി | தொண்டி | 84 |
| गोधणी | Sebesten | ചെറിയ നറുവരി | சிறுநறுவிலி | 90 |

| | | | | |
|---|---|---|---|---|
| गोरक्षतुम्ब | A variety of White-gourd | വട്ടച്ചുര (കടച്ചുര) | ஒருவகைச் சுரைக்காய் | 158 |
| गोरखिरज्ञिणी | A white variety of gigantic Swallow-wort | വെള്ള എരുക്ക | வெள்ளெருக்கு | 112 |
| गोरोचना | Galt-stone Bijoor | ഗോരോചന | கோரோசனை | |
| गोस्तनी | A vine with brown grapes | വലിയമുന്തിരി | பெருங்கொடிமுந்திரி | 119 |
| | | | | 92 |
| घिण्ढूलि | Boerhavia diffusa | തഴുതാമ | சாரடை | 69 |
| घोटी | Mare | പെൺകുതിര | பெண்குதிரை | 148 |
| घोरफड | Iguana | ഉടുമ്പ് | உடும்பு | 171 |
| चञ्चू | Water cress | നീർച്ചീര | ஒருவகைக் கீரை | 72 |
| चणकपत्र | Leaf of Bengal-gram | കടലയില | கடலை இலை | 36 |
| चतुरङ्ग परवरे | The leaves, stem, fruits and roots of Snake-gourd | പടവലത്തിന്റെ ഇല, തണ്ട്, കായ്, വേര് ഇവ | புடலின் இலை, தண்டு, காய், வேர் இவை | 81 |
| चतुष्पत्री | The four-leaved Marsilea quadrifolia | ഒരുതരം നീരാരൽ | ஆரை | 75 |
| चाकवत | White Goose-foot | ചീര (വാസ്തുചീര) | சக்கிரவர்த்திக்கீரை | 66 |
| चाण्डालकन्द | A kind of root | പറയൻകിഴങ്ങ് (ഉള്ളാടൻകാച്ചിൽ) | ஒருவகைக் கிழங்கு | 64 |

## Glossary I—(contd.)

| Mahratti | English | Malayalam | Tamil | Page |
|---|---|---|---|---|
| चान्द्रवेलि | A creeping plant, Ipomoea bonanox | പ്രസാരണി (തലനീളി) | முதியாகுந்தல் | 72 |
| चामकुरा | Alocasia antiquorum | ചേമ്പ് | சேப்பங்கிழங்கு | 78 |
| चारेल | Oil of the Piyal tree | മുരളെണ്ണ | முரளெண்ணெ | 154 |
| चारोळ्या | The seed of Piyal | മുരൾകുരു | முரள்விதை | 97 |
| चिंचा | Tamarind tree | കോൽപുളി, വാളമ്പുളി, വാരൻപുളി | புளியமரம் | 98 |
| चिभट | Cucumis mormordica | വെള്ളത്തവെള്ളരി | ஒருவகை வெள்ளரி | 114 |
| चिलबीज | Clearing Nut, nut which clears water | തേററാംപരൽ | தேற்றுங்கொட்டை | 112 |
| चीनकर्पूर | A kind of Camphor | ചീനക്കർപ്പൂരം | சீனக்கர்ப்பூரம் | 120 |
| चील | Purple Goose-foot | ചുവന്നവാസ്തുചീര | ஒருவகைச் சுவந்தகீரை | 66 |
| चीवलीघोल | A kind of leafy vegetable | ചിവല്ലികാ | ஒருவகைக் கீரை | 73 |
| चुका | Wood-Sorrel | പുളിയാരൽ | புளியாரை | 66 |
| चोर निम्बू | A kind of Lemon | ചെറുനാരകം | ஒருவகை நார்த்தை | 96 |

